लाभात्। अपितु उपास्योद्गीथस्तावकत्वेनैव; उपास्योद्गीथमादाय स्तुति-
पलम्भात् इति 'स्तुतिमात्रमुपादानादिति चेत्' इति सूत्रखण्डेन पूर्वपक्षं
'नापूर्वत्वात्' इति सूत्रखण्डेन च, 'भावशब्दाच्च' इति सूत्रेण च
: कृतः।

अयमर्थः — उद्गीथे रसतमत्वादीनां मानान्तराप्राप्तत्वेन अनुवादमुखेन
भवात्; 'इयमेव जुहूः' इत्यादौ जुहूविधेः संनिहिततया तदेकवाक्य-
स्तावकत्वसंभवेऽपि क्रतुप्रकरणगतोद्गीथविधेरसंनिहिततया तदेकवाक्यत्वा-
; 'एतद्ब्राह्मणान्येव पञ्च हवींषि' इत्यादिवत् तदेकवाक्यताकल्पकवच-
ावात्। 'ओमित्येतदक्षरमुद्गीथमुपासीत' इति संनिहिते विस्पष्टविधि-
क क्रियावाचिनि भावशब्दे विद्यमाने तदेकवाक्यतामनादृत्य क्रतुप्रकरणगतो-
थैकवाक्यताकल्पनस्यान्याय्यत्वात्।

ननु संनिहितोपासनविध्येकवाक्यत्वेऽपि उपास्योद्गीथस्तावकत्वेनैव रसतमा-
ानामेकवाक्यताऽस्तु; न तु उपास्यसमर्पकत्वेनेति चेन्न — उपासनविषयसम-
प्रवृत्तिविशेषक [२] त्वे संभवति व्यर्थप्रायस्तुतित्वकल्पनाया [2]अन्याय्यत्वात्।
अतो रसतमत्वादिकमप्युपास्यमेव। ततश्च रसतमत्वादिविशिष्टतयैवोद्गीथो-
र्तव्यं [3]तत्तत्फलार्थिभिरिति स्थितम्॥

(२) तथा [गुणोपसंहारपादे?]— 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यादौ
सामान्येन व्यवहारासंभवात् विशेषाकाङ्क्षायां तत्तच्छाखागतानामेवोद्गीथव्य-

उपास्यस्य ख.। 2. अयुक्तत्वात् ख. 3. तत्फलार्थि. ख.

वा एतानि हवींषि' इति। तत्राऽऽथानि, 'आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुं पौष्णं
याद्युक्तानि पञ्च हवींषि वरुणप्रघासेऽपि विहितानि पञ्चसञ्चराः। तत्रेदं वाक्यं श्रूयते,
नीति। वैश्वदेवपर्वगतानि हवींषि यादृशब्राह्मणवाक्ययुक्तानि, वरुणप्रघासगतानि इमा-
ाह्मणकान्येवेति तदर्थः। तत्र ब्राह्मणशब्देन अर्थवादस्याङ्गविधीनाञ्च ग्रहणमिति
-१-४.) सिद्धान्तितम्। सर्वथा अर्थवादस्य वैश्वदेवगतस्य वरुणप्रघासविधिभिरेक-
न्वयस्य तत्र पूर्वपक्षिसिद्धान्त्युभयेष्टत्वात् तद्वदेव क्रतुप्रकरणगतोद्गीथविधिसमभिव्याहा-
ादिवाक्येऽभावेऽपि तदेकवाक्यता भवितुमर्हतीति भावः। तत्र एतद्ब्राह्मणानीति
त्वात् व्यवहितयोरेकवाक्यत्वं युक्तम्; न त्वत्र, गमकाभावादिति सिद्धान्त्याशय उपरि
।

क्तीनां संनिहितत्वात् तन्मात्रविषयत्वमेवोद्गीथश्रुतेः युक्तम् । ततश्च ताण्डिश रसतमत्व — कामाप्ति — हिरण्मयपुरुष — आकाशादिदृष्टिविशिष्टोपासने शाखागतोद्गीथव्यक्तेरेव क्रतुमध्यप्रयुक्ताया उपास्यत्वम्, न तु शाखान्तरग व्यक्तेः । न च सर्वशाखागतोद्गीथानामैक्यं शङ्क्यम् — स्वरादिभेदेनोद्गीथ भिन्नत्वात् । न चोद्गीथश्रुतेः संकोचलक्षणबाधप्रसङ्ग इति वाच्यम् — इ मानयेत्यादौ पटशब्दस्य व्यक्तिविशेषार्थकत्वेऽपि,

" जातिव्यक्ती गृहीत्वेह त्वं तु श्रुतलक्षिते ।
कृष्णादि यदि मुञ्चामः का श्रुतिस्तत्र पीड्यते "॥

इति [1]न्यायेन — श्रुत्यर्थभूतायाः पटत्वजातेः, लक्ष्याया व्यक्तेश्चा गेन पटश्रुत्यबाध इत्युक्तरीत्या — उद्गीथश्रुतेरप्यबाधात् तत्तच्छाखागतोद्गी विषयत्वमेव — इति पूर्वपक्षे प्राप्ते,

उच्यते — 'अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्' । इ पूर्वपक्षव्यावृत्त्यर्थः । उद्गीथाद्यङ्गावबद्धा उपासनाः तत्तच्छाखागतोद्गीथव्यक्ति व्यवतिष्ठेरन् । अपितु प्रतिशाखं संबध्येरन् । शुक्लं पटमानयेत्यादौ शुक्लपदस व्याहारान्यथानुपपत्त्या विशिष्टैकार्थप्रत्यायनाय अविशेषप्रवृत्तश्रुतेः पीडनेऽपि तादृशबाधकाभावेन अविशेषप्रवृत्तोद्गीथश्रुतेः सन्निधिमात्रेण संकोचा[2]संभवात् । न्तरगतः क्रतुमध्ये प्रयुज्यमानः उद्गीथः शाखान्तरोक्तोपासनप्रकारेणाप्युपास्य इ

'मन्त्रादिवद्वाऽविरोधः' । शाखान्तराम्नातानां मन्त्रादीनां शाख म्नातक्रतुसंबन्धवत् शाखान्तरगतोपासनानामपि शाखान्तरगतोद्गीथसंबन्धे वि भावात् — इति स्थितम् ॥

1. इत्युक्तन्यायेन. ग. 2. संकोचाभावात्. ख.

---

**ताण्डिशाखागते**ति छान्दोग्यगतेत्यर्थः । **श्रुतलक्षिते** इति । जातेः श्रुतत्वं लक्षितत्वञ्चात्रोक्तम् । मीमांसावाक्यमिदमिति तन्मते तद् युक्तम् । अस्मन्मते तु ज व्यक्तेरपि श्रुतत्वमेव । अथापि सर्वत्र सामान्यं पदार्थः, विशेषो वाक्यार्थः इति न्यायेन श सर्वे यक्तिवाचित्वेऽपि संनिहितकतिपयव्यक्तिग्रहणेन वाक्यार्थवर्णनमेव गामानयेत्यादौ इ संनिहितोद्गीथव्यक्तिरेव ग्राह्येति पूर्वपक्षी मन्यते । यावति विशेषे संकोचाभावे समभिव्य पदान्वयभङ्गः, तावत्संकोच इष्टः सर्वत्र । न चात्रोद्गीथपदस्य स्वरसस्थितसर्वोद्गीथग्राहकत्वे व दनुपपत्तिरिति सिद्धान्ती ।

(३) तथा गुणोपसंहारपादे— 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यादिना
ामङ्गावबद्धोपासनानाम् अव्यभिचरितक्रतुसंबन्धिजुहूपस्थापितक्रतुफलनिरा-
ादिवत् अव्यभिचरितक्रतुसंबन्ध्युद्गीथोपस्थापितक्रतुफलेनैव नैराकाङ्क्ष्यात्,
ोर्यवत्तरं भवति' इति वीर्यवत्तरत्वादिश्रवणानामर्थवादत्वात् व्रीहिप्रोक्षण-पर्णता-
मङ्गत्वात् उपासनानि क्रतौ नियमेनोपादेयानीति पूर्वपक्षे प्राप्ते — उच्यते।
रणानियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम्'। निर्धारणं निश्चयेन मनसो-
म्; ध्यानमित्यर्थः। तस्योपासनस्य अनियमः नियमेनाननुष्ठानम्, 'तेनो-
ो यश्चैतदेवं वेद यश्च न वेद' इत्यनियमदर्शनात्; तस्योपासनस्य प्रबल-
न्धरूपवीर्यवत्तरत्वलक्षणफलान्तरवत्त्वेन कर्माङ्गत्वाभावादित्यर्थः। अयं भावः—
बरता[1]दिस्थले विधिविभक्त्यश्रवणादर्थवादेनैव विधिशक्तिमुपजनय्य पुन-
ःलसमर्पणे विरम्यव्यापारात् वाक्यं भिद्येत । उपासनायां तु विस्पष्टविधि-
फलविधित्वे[2] वाक्यभेदशङ्का। अतः पर्णतोदुम्बरतादिविध्यपेक्षया उपासन-
ात् फलविधित्वं संभवति इति स्थितम्।

(४) तथा अङ्गपादे—मुक्तिव्यतिरिक्तफलकोपासनानामुद्गीथविद्यारहितयज्ञादि-

[1] त्वा. ख. 2. त्वेऽपि. क. ग.

व्यभिचरितक्रतुसंबन्धीति। पर्णतावाक्यस्य क्रतुप्रकरणेऽभावेऽपि जुह्वाः क्रतो-
गाभावात् क्रतुसंबन्धस्तया अव्यभिचरित इति क्रत्वन्वयनियम इति। संबन्धीत्येव
ः; न संबन्धेति। अव्यभिचरितं यथा तथा क्रतुसंबन्धीति विग्रहः। प्रबलेति।
तेबन्धरूपं (फलान्तरं.) वीर्यवत्तरत्वलक्षणं क्रतुफलस्य अप्रतिबद्धफलकत्वरूपस्य
य लक्षणं निरूपकं यत् फलान्तरं क्रतुफलादन्यत् फलम्, तद्वत्त्वेनेत्यर्थः। विधिवि-
त्यादिः। अर्थवादेनैवेति। विध्यभावादविहितस्य स्तवनासंभवात् अर्थवादलब्ध-
विधिकल्पनेति प्रथमं स्तुतिबोधनव्यापारोऽर्थवादस्य; तदनन्तरं विहितस्य फला-
पुनस्तस्यैव फलबोधनव्यापार इति विरम्यव्यापारः। अत एव वाक्यद्वयेऽभ्युपेय-
मेकत्र स्वीकारात् वाक्यभेददोषश्च।

विविदिषन्ति यज्ञेन' इत्यादि विहितानि कर्माणि वीर्यवत्तरत्वाय विद्यासहितमनुष्ठीयन्ते।
चतुर्विधा भजन्ते माम्' इत्यादिप्रामाण्यात् सर्वफलार्थम्। तदिदं मुक्तिव्यतिरिक्त-
फलकत्वं वेदनमुद्दिश्य कर्माण्यनुष्ठीयमानानि प्रकृतोद्गीथविद्यादिप्रबलोत्तेजकाभावे
ाबद्धफलानि भवेयुरिति, अङ्गपादे विद्याङ्गकर्मनिरूपणानन्तरमन्ते तत्कार्यनिष्पत्ति-
तः। तमपि प्रकृतविद्यासंबन्धित्वाद् दर्शयति तथेत्यादिना। इहैवेति। ननु ऐहि-

कर्मनिष्ठाद्यानामपि यज्ञादिरूपसाधननिष्पत्तौ सत्यां विलम्बे हेत्वभा
निष्पत्तिरिति पूर्वपक्षे प्राप्ते--उच्यते। 'ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्श
रिक्तफलकमुपासनं अप्रस्तुतप्रतिबन्धे प्रतिबन्धाभावे ऐहिकं इहैव
सति प्रतिबन्धे जन्मान्तरे। न च प्रतिबन्धा[1]संभवः शङ्कनीयः;
करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इत्युद्गीथविद्यायाः
प्रतिबद्ध (न्ध?) फलकत्वावेदनेन प्रबलकर्मान्तरप्रतिबन्धस्यानुज्ञा
'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इति यज्ञादेर्वेदनसाध
रीर्यभिचारादिवत् नियतैहिकत्वमेव किं न स्यादिति वाच्यम् — इ
वैरिविशेषविपत्तिफलकत्वेन विहितानां तेषां नियतैहिकत्वेऽपि विद्यास
तज्जन्मनि विद्योद्देशेनाविहिततया पश्वादिफलकचित्रेष्ट्यादिवत् नियत
पूर्वतन्त्रे चतुर्थाध्याये योगसिद्ध्यधिकरणे तथा निर्णीतत्वात् इति रि

(५) तथा तदुत्तराधिकरणे--यथानुरूपो बलिरिति न्यायेन
मुक्तिफलकब्रह्मोपासनानां प्रबलकर्मान्तरप्रतिबन्धासंभवात् नियतैहिक
प्राप्ते — उच्यते, 'एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थाव

1. संभवति. ख. इहैव जन्मनि भवम् इहैव जन्मनि भवति ग. भावः क.

---

कमित्यस्य इहैव जन्मनि भवमित्यर्थस्वीकारे मुक्तिव्यतिरिक्तफलकस्यैव मुक्ति
नस्याप्रतिबन्धे ऐहिकत्वमेतदधिकरणसिद्धमिति उत्तराधिकरणं व्यर्थं स्यात्। अ
फलकोपासनरूपपक्षसमर्पकं वाच्यम्। न तु साध्यपरम्। उपरि सूत्रे मुक्ति
सननिर्देशवत् इति चेन्न---ऐश्वर्यफलकोपासनमात्रपरत्वेऽपि तुल्यन्यायेन मुक्ति
तदधिकरणवैयर्थ्यात्। अधिकाशङ्कया तत्प्रवृत्तिरिति चेत्, अस्याधिकरणस्य
विशिष्याधिकाशङ्कया आक्षेपे तत्प्रवृत्तिरिति सुवचम्। तथा च कर्मणि अप्रस्
कर्मफलमैहिकमिति सूत्रार्थः। वस्तुतः ऐहिकपदं पक्षपरं साध्यपरं वेति विम
कार्यो द्रष्टव्यः।

ननु चित्रेष्ट्यादिदृष्टान्तेऽप्यनियतैहिकत्वमसिद्धमित्यत्र तत्र पूर्वमीमांसा
ति। योगसिद्धीति। 'योगसिद्धिर्वाऽर्थस्योत्पत्त्यसंयोगित्वात्' इति तत्र
तत्राधिकरणे वर्णकद्वयम्। प्रथमवर्णके सर्वे कामाः एकप्रयोग एवेति पूर्वः पक्ष
योगः तस्यैकस्यैवैकस्मिन् प्रयोगे सिद्धिरिति सिद्धान्तः। द्वितीयवर्णके पश्वा

१—२

देवासुरा ह वै यत्र संयेतिरे उभये प्राजापत्याः। तद्ध देवा उद्गीथ-
, 'अनेनैनान् अभिभविष्याम' इति ॥ १ ॥
ते ह नासिक्यं प्राणमुद्गीथमुपासाञ्चक्रिरे; तँ हासुराः पाप्मना

---

ानामप्यैहिकत्वनियमो नास्ति, अ(१)प्रस्तुतप्रतिबन्धत्वरूपावस्थायाः विशेषेण धृतवात् । तत्रापि प्रबलानां ब्रह्मविदपचारादिप्रतिबन्धकानां संभवात् । ध्यायपरिसमाप्त्यर्था । प्रकृतमनुसरामः । १-१.

---

उद्गीथावयवे ओङ्कारे मुख्यप्राणदृष्टिं विधातुमाख्यायिकां प्रस्तौति — देवा-
— प्राजपत्याः । द्विविधाः प्रजापतिसुताः देवासुरा' यत्र यस्मिन् काले
ंयेतिरे युद्धं कृतवन्त इत्यर्थः । प्राजापत्या इति अपत्यार्थे, 'दित्यदि-
त्युत्तरपदाण्ण्यः' इति ण्यः । तद्ध — इति । तत् तदा [ ह प्रसिद्धं
था ] देवाः अनेनैव उद्गीथावयवेन ओङ्कारेणोपासितेन एनान् असुरान्
ाण्यामः जेष्यामः इत्यभिसंधाय उद्गीथ'प्रणवमुपायत्वेन स्वीकृतवन्त-

े — चक्रिरे । ते देवाः घ्राणेन्द्रियत्वेनोद्गीथमुपासितवन्त इत्यर्थः ।
भवं नासिक्यम् । 'शरीरावयवाच्च' इति यत् । तं — विविधुः । तं

अयं क पाठः । अन्यत्र 'उद्गीथं प्राणमुपायत्वेन' इति ।

---

्। अधर्मेणाप्रतिबन्धे इह जन्मनि, अन्यदा अमुत्रेति । ननु तर्हि तदधिकरणन्याये-षयेऽपि सिद्धौ इदं शारीरकाधिकरणं व्यर्थमिति चेन्न—विचारवैषम्यात् । तत्र हि न्याः कामाः सर्वेऽपि स्वर्गाद्यविशेषादमुत्रैव भवेयुरिति पूर्वपक्षे, अर्थ्यमानस्य फलस्य त्येकलभ्यत्वाभावात् यथायोगं सिद्धिः, योग्यतानुसारेणात्रापि सिद्धिः, प्रतिबन्धवशा-ताया अभावे तु तत्रेति सिद्धान्तितम् । नियतैहिकमपि किञ्चित् कर्मास्तीति च प्रदर्श्य कत्वं निराकृतं तत्र । अत्र तु शारीरके तत्रोक्तनियतैहिकाभिचारादिवत् नियतैहिकत्वं । प्रतिबन्धं प्रदर्श्य तन्निराकृतमिति ।

सक्यं प्राणमिति ! घ्राणमित्यनुक्त्वा एवमुक्तिः, 'उद्गीथे प्राणदृष्टिः शास्त्रोक्ता । वेशेषवत् इन्द्रियमपीति मुख्यामुख्यानवबोधेन घ्राणरूपप्राणे प्रवृत्तिर्देवानामासीदिति

**विविधुः ; तस्मात् तेनोभयं जिघ्रति सुरभि च दुर्गन्धि च ; पाप्मना ह्येष विद्धः ॥ २ ॥**

**अथ ह वाचमुद्गीथमुपासाञ्चक्रिरे ; ताँ हासुराः पाप्मना वि… तस्मात् तयोभयं वदति सत्यञ्चानृतञ्च ; पाप्मना ह्येषा विद्धा ॥ ३**

**अथ ह चक्षुरुद्गीथमुपासाञ्चक्रिरे ; तद्धासुराः पाप्मना वि… तस्मात् तेनोभयं पश्यति दर्शनीयञ्चादर्शनीयञ्च ; पाप्मना … विद्धम् ॥ ४ ॥**

**अथ ह श्रोत्रमुद्गीथमुपासाञ्चक्रिरे ; तद्धासुराः पाप्मना विवि… तस्मात् तेनोभयँ शृणोति श्रवणीयञ्चाश्रवणीयञ्च ; पाप्मना … विद्धम् ॥ ५ ॥**

---

नासिक्यं प्राणमसुराः स्वकीयेन पाप्मना संयोजितवन्तः । पापहेतुभूतवृत्त्या… जितवन्त इति यावत् । **तस्मात् — विद्धः** । **तस्मात्** पापसंसर्गाद्धेतोः घ्राणेन सुरभि च दुर्गन्धि चोभयं जिघ्रति । तस्मान्नासिक्यः प्राणः पापवि… त्यर्थः । **अथ — विद्धा** । पूर्ववत् । **अथ — विद्धम्** । **अदर्शनीयम्** … ध्यादिकमित्यर्थः । **अथ ह श्रोत्रं — विद्धम्** । **अश्रवणीयं** पापवचनमि…

---

ज्ञापयितुम् । उपरि **चक्षुरि**त्यादावपि प्राणमिति पदस्यानुषङ्गः । **सुरभि च दुर्गन्धि** … वागादौ वक्ष्यमाणानुसारात्, घ्रातुमर्हमनर्हञ्चेत्यर्थः । अत एव पापहेतुभूतवृत्त्येति भा… **वृत्तिरि**न्द्रियव्यापारः । तस्याः पापहेतुत्वं निषिद्धत्वात् । दुर्गन्ध्याघ्राणं निषिद्धमेवेति । **ना**सिक्य इति । पूर्ववाक्ये **तस्मा**दिति हेतोर्निर्दिष्टत्वात् अत्र **पाप्मना** हीति हिश… हेत्वाविति भावः । ननु बृहदारण्यके, 'घ्राणेन्द्रियमुद्गातृ भूत्वा यजमानेषु भोगविशेषं कल्याणघ्राणञ्च फलमकामयत । तदा असुराः तत्कार्यभङ्गकामाः पाप्मनैतेन घ्राणे दुर्ग… कल्पयामासुः' इत्युक्तम् । तत् युज्यते । अत्र तु घ्राणादेरुद्गातृत्वकल्याणघ्राणकामित्वाद… देवानामेवोद्गीथे घ्राणादिदृष्टिकर्तृत्वात् घ्राणादेर्दूषणमसुरकृतं किमर्थमिति चेत् — निकृष्टे दृष्टेरेव कर्तव्यत्वात् उद्गीथे घ्राणदृष्टिं क्रियमाणां दूषयितुं घ्राणे निकर्षकल्पनाय तद् दु… सुरित्येवं योयुज्यते ।

अथ ह मन उद्गीथमुपासाञ्चक्रिरे ; तद्धासुराः पाप्मना विविधुः ; तेनोभयँ संकल्पयते¹ संकल्पनीयञ्चासंकल्पनीयञ्च ; पाप्मना ह्येतद्विद्धम् ॥ ६ ॥

अथ ह, य एवायं मुख्यः प्राणः, तमुद्गीथमुपासाञ्चक्रिरे ; तँ हासुरा ऋत्वा विदध्वँसुः; यथाऽश्मानमाखणमृत्वा विध्वँसेत, एवम् ॥ ७ ॥

यथाऽश्मानमाखणमृत्वा विध्वँसते, एवँ हैव स विध्वँसते, य एवंविदि पापं कामयते, यश्चैनमभिदासति ; स एषोऽश्माखणः ॥ ८ ॥

¹ संकल्पते शां - क्वचित् ।

---

मनः — विद्धम् । असंकल्पनीयं पापमित्यर्थः ।

अथ — चक्रिरे । उद्गीथावयवमोङ्कारं मुख्यप्राणत्वेनोपासितवन्त इत्यर्थः ।

विदध्वँसुः । तं मुख्यप्राणं पाप्मना वेद्धुं प्रवृत्ता असुराः तं ऋत्वा प्राप्य विदध्वंसुः । विध्वस्ता अभवन्नित्यर्थः । तत्र दृष्टान्तमाह—यथाऽश्मानं— आखन्यत इति आखणं मृत्पिण्डः । यथा मृत्पिण्डोऽश्मानं प्राप्य विध्व-, एवम्' इति व्यासार्यैर्व्याख्यातम् । आखणमिति च्छान्दसं णत्वम् ; त ।

तद्विद्यायाः फलमाह — यथा — दासति । एवंविदि एतद्विद्यानिष्ठे तुं कामयते, यश्चैनं अभिदासति हिनस्ति, सः अश्मप्राप्तलोष्टवत् ध्वस्तो : । दा प्लवन इत्यतः, दो अवखण्डने इत्यतो वा लेटि, 'सिब्बहुलं ' सिपि दासतीति रूपम् ।

एषोऽश्माखणः । स एषः एतद्विद्यानिष्ठे पापकामः अश्माखणः

---

: प्राण इति । मुखे अङ्गे भवः मुख्यः, नासिक्य इतिवत् । 'आसन्यं प्राणमूचुः' तरम् । आस्यमुखवदनादिशब्दाः संस्कृते व्याहाराभ्यवहारसाधनावयवसंस्थान एव तु ललाटादौ । इन्द्रियाणां प्राणशब्दगौणार्थत्वात् तद्वारकं प्राणपदमुख्यार्थत्वरूपं त प्राणवायोः । तत्तु प्राणापानव्यानादिसर्वसाधारणम् । सामान्यतः प्राणवायुत्व- । चेत्, कामं तदप्यस्तु ।

**नैवैतेन सुरभि न दुर्गन्धि विजानाति; अपहतपाप्मा ह्येषः**

अश्मप्राप्ताखण इत्यर्थः । एतेन — 'खनो घ च' इति घप्रत्ययस्य, '
धिकरणयोः' इत्यनुवृत्त्या कर्मण्यभावात्, करणार्थ एव घप्रत्ययो व
अतः आखणशब्दस्याश्मविशेषणत्वमेव वक्तव्यम् । 'खननसाधनतया ह
प्राप्य यथा लोष्टादिकं ध्वंसते' इति हि तस्यार्थः । अत एव **स एषोऽ**
इति वाक्यशेषे अश्मविशेषणत्वमेव आखणस्य श्रूयते—इति शङ्काऽपास्ता ।
सनेयके समानप्रकरणे, 'यथाऽश्मानमृत्वा लोष्टो विध्वंसते' इति श्रवणेन
नार्थत्वस्य वक्तव्यतया आखणशब्दस्य लोष्टवाचित्वस्यैवोचितत्वात् । बहुल
कर्मण्यपि घप्रत्ययस्योपपत्तेः । इतरथा कर्तृवाचिपदाध्याहारप्रसङ्गात् । 'स ए
खण' इत्यत्र अश्माखणशब्दस्य समस्तस्य अश्मप्राप्ताखणवाचित्वेन, अश्मश
मानाधिकरण्येनाखणशब्दस्याश्मविशेषणत्वाभावात् । पूर्ववाक्ये नपुंसकलिङ्ग
स्यापि स एष इति पुलिङ्गसामानाधिकरण्येन आखणशब्दस्य पुलिङ्गत्वोपपत्ते
द्रष्टव्यम् ।

इतरप्राणाद्यपेक्षया तस्य वैषम्यमाह **नैव — विजानाति । एतेन**
प्राणेनेत्यर्थः । पुरुष इति शेषः । तत्र हेतुमाह **अपहतपाप्मा ह्येषः** । स्पष्टोऽर्थः

---

**नयमयूखमालिको**क्तं पक्षमपास्यति **एतेनेति** । **अश्मविशेषणत्वमेवेति** । उ
इति पृथक्पदमश्मविशेषणम् । आखणपदद्वयमपि यथानुशासनं पुलिङ्गम् । **स एष** इति
उपासक उच्यते । तस्य आखणाश्मत्वं ध्वंसकतया तत्तुल्यत्वादिति भावः । आखन्यते अ
खनः इति **माधवी धातुवृत्तिः** । नेयं शङ्का शाङ्करानुसारिणः । शाङ्करभाष्येऽप्याखण
कर्मण्युत्पत्तेरेव गृहीतत्वात् । परंतु **अखनः** खनितुमशक्यः । अखण एव आखण इत्यस्मा
कृतम् । तदा कर्तुरध्याहारे आखणशब्दव्युत्पादने च क्लेशः । तत्रापि **अश्माखण** इत्येकप
दतम् । तदपि चिन्त्यम्—आखणस्याश्मविशेषणत्वे आखणाश्मेति समासापत्तेः । सिद्ध
अश्मप्राप्ताखणरूपार्थविवक्षया अश्माखण इति समासोपपत्तिः । एवञ्च तदनुसारेण **स ए**
नोपासकपरम्; किन्तु द्वेषिपरम् । **स एष** इत्यस्य पूर्ववाक्यार्थे यत् प्रधानम्, तत्परा
स्यैव युक्तत्वाच्च । तत्र च ध्वंसमानः प्रधानम्, न तु **एवंवित्** ।

**नैवैतेन सुरभीति** । नन्वयमप्रसक्तप्रतिषेधः । मुख्यप्राणस्य आघ्राणसामर्थ्याभ
उच्यते । घ्राणादीनां मुख्यप्राणाधीनप्रवृत्तिकत्वात् मुख्यप्राणगतपाप्मवशादेव घ्राणादीनां दु
दिग्राहकत्वमिति किं न स्यादिति शङ्कापरिहारार्थमयं ग्रन्थ इति । घ्राणादेर्दुर्गन्धादिग्राहकत्व
मुख्यप्राणस्य किञ्चिदनिष्टापादकत्वमित्यत्र तात्पर्यम् । प्रत्युतास्य घ्राणाद्युपकारकत्वमति

ते यत् पिबति तेनेतरान् प्राणानवति ; एतमु एवान्ततोऽविच्चो-
ते ; व्याददात्येवान्तत इति ॥ ९ ॥
तँ हाङ्गिरा उद्गीथमुपासाञ्चक्रे ; एतमु एवाङ्गिरसं मन्यन्ते,
यद् रसः ॥ १० ॥

---

अवति । [1] तस्यापहतपाप्मत्वेनैव प्राणान्तरवत् आत्मम्भरित्वाभावात् स्वा-
दिना इतरान् प्राणान् रक्षतीत्यर्थः । एतमु — क्रामति । यत एव
ाणसमुदायो मुख्यप्राणाशितपीतलब्धसत्ताकः, अत एव अन्ततः मरणकाले
ाशितादेरभावेन एतमविच्चा अलब्ध्वा उत्क्रामतीत्यर्थः । विद्लृ [2] लाभे
ातुः । व्याददात्येवान्ततः । अन्ततः मरणकाले सर्वप्राणानामुत्क्रमणा-
स्यव्यादानं करोतीत्यर्थः ।

— चक्रे । तम् अध्यस्तप्राणभावम् उद्गीथम् उद्गीथावयवमोङ्कारम-
षेरुपासाञ्चक्रे इत्यर्थः । केचित्तु अङ्गिरसोपास्यमेव मुख्यप्राणमङ्गिरसं वद-
- एतमु — रसः । अङ्गानां प्राणाधीनस्थितित्वेन प्राणस्याङ्ग [4] रसत्व-
: । अङ्गरसमङ्गिरसं वदन्ति परोक्षप्रियत्वाद् देवानामिति भावः । तेन—

ेनैव हेतुना तस्यापहतपाप्मत्वादेव ख. ग. 2. विदिर्लृ ख. 3. अस्य ख. ।
ङ्ग. ग. ।

---

यदश्नातीति । बृहदारण्यके एतदर्थविस्तरः । व्याददात्येवेति । अशिताद्युप-
ां शरीरे यथावत् स्थापनेन कायव्यूहनकारी ह्ययं निष्क्रान्त इति सूचनायैव जातं
शितनिक्षेपेऽपि न निवर्तत इति एवकाराशयः । मुखे स्थितं प्राणमत्र स्थापयितु-
ते उपसर्पन्तः तमुत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति । एतद्वन्दनिष्क्रमणार्थमिवेदं
रस्मैपदम्, " आङो दोऽनास्यविहरणे " इति पर्युदासात् ।

ोपासनमुद्गीथप्राणोपासककतिपयर्षिनामविवक्षितगुणविशेषविषयकं कर्तव्यम् । न तु
पमुख्यार्थो ग्राह्यः । तत्तदृषिणाऽप्येवमेतस्योपासितत्वादित्युपदिशति तं हेत्यादि-
यास्याऽऽङ्गिरसत्वबृहस्पतित्व ब्रह्मणस्पतित्वानि बृहदारण्यकोक्तानि । अत्र तु अङ्गि-
ायास्यत्वान्युक्तानि । अङ्गिर आङ्गिरसयो र्निर्वचनम्, अङ्गानां रस ' इति ; बृह-
बृहत्याः वाचः पतिरिति; अयास्यनिर्वचनं तत्र, – ' अयमास्येऽन्तः ' इति
ात् अयत ' इति । एतमु एवाङ्गिरसमित्यत्र अङ्गिरःपदानुसारात् अङ्गिरसमिति

तेन[1] तँ ह बृहस्पतिरुद्गीथमुपासाञ्चक्रे; एतमु एव बृहस्पतिं न्ते, वाग्घि बृहती, तस्या एष पतिः ॥ ११ ॥

तेन[1] तँ हायास्य उद्गीथमुपासाञ्चक्रे; एतमु एवायास्यं म आस्याद् यदयते ॥ १२ ॥

तेन[1] तँ ह बको दाल्भ्यो विदाञ्चकार; स ह नैमिषीयाणा बभूव, स ह स्मैभ्यः कामानागायति ॥ १३ ॥

1. तेनेतिपदानि पूर्वपूर्ववाक्यान्तस्थितान्येव माध्वे ।

---

**चक्रे** । तेन [1] अङ्गिरस्त्वेन गुणेन बृहस्पतिरुपासितवानित्यर्थः । **एतमु**— वागिन्द्रियस्य सर्वार्थप्रकाशकत्वादिना बृहत्त्वम्[2] । तस्य च [3] मुख्यप्राणाधी प्राणस्य वाक्पतित्वम् । अत उपास्यस्यैव बृहस्पतित्वं मन्यन्त इत्यर्थः । **तेन** **यास्यः — चक्रे** । तेन बृहस्पतित्वेन अयास्यः ऋषिरुपासितवानित **एतमु — यदयते** । आस्यात् मुखात् अयते निर्गच्छतीत्यर्थः ।

**तेन तं ह बको**—चकार । **तेन** पूर्वोक्ताङ्गिरस्त्वबृहस्पतित्वायास्यत्वा विशिष्टतया दल्भसुतो बकनामा ऋषिरुपासितवानित्यर्थः । **स ह—बभूव** । स्पष्टो

1. अङ्गिरसत्वेन. ख. आङ्गिरसत्वेन. ग. 2. त्वात. ख. । 3. 'च' इति न ख.

---

च्छेदो युक्तः । शाङ्करभाष्ये अङ्गिरसमितिपरकृतच्छेदस्यानुवादोऽस्ति । स्वयं तु 'तेनासाव इत्युक्तम् । अत्र, अङ्गिरा उपासाञ्चक्रे, अयास्य उपासाञ्चक्रे इति पृथक्पृथक् कथनात् अ नाङ्गिरा इति ज्ञायते । स एव त्वयास्यः अङ्गिरोवंश्यः स्यात्, आङ्गिरस इति तन्त्रोक्तेः । एवमनेकर्ष्यादिनामनिर्वचनमैतरेयारण्यके(२.२)

तेन अङ्गिरस्त्वेनेति । अध्ययनार्थकल्पितविरामस्य वाक्यमध्येऽपि दर्शनात्, ह' इति वाक्यत्रयगतमपि पदं पूर्वपूर्ववाक्यान्वयि कृत्वा, 'यस्माद्धेतोरङ्गानां रसः तेन अङ्गिरसं मन्यन्ते' इत्येवंरीत्याऽर्थवर्णनं सुकरम् । तेन कारणेन तेन निरुक्ताङ्गिरस्त्वधर्मेण अप्युपासाञ्चक्र इति वा— अथापि तेनेतिपदं विनैव तदर्थसिध्या, उत्तरत्रैवमन्वयसंभवेन च श्रुतवाक्यभेदस्वीकारेणैव व्याख्यानमकारि । माध्वे तु तेनेतिपदं पूर्ववाक्य एव पठि न्वङ्गिरा अपि उक्तयोगार्थेनाङ्गिरस्त्वेनोद्गीथोपासनं कर्तव्यं त्यक्तुं नार्हति । तत् बृहस्पतौ र्णने को विशेष इति चेत् — अङ्गिराः कदाचित् स्वनामाभिमानात् तथोपासितवान् न त्वन्य इति मा भ्रमः । योगार्थगौरवादेवं ह्यन्येऽप्युपासते इति ज्ञाप्यत इति ।

विदाञ्चकारेति । नन्वत्र उपासाञ्चक्र इत्यप्रयोगात् उद्गीथमिति पदाभावाच्च उक्त स्त्वादिविशिष्टतया प्राणं बको बुबुध इत्येव वाक्यार्थोऽस्त्विति चेत् — एवं तर्हि **आगायति**

आगाता ह वै कामानां भवति, य एतदेवं विद्वानक्षरमुद्गीथमुपा-
[स्त]त्यध्यात्मम् ॥ १४ ॥

इति प्रथमाध्याये द्वितीयः खण्डः ।

---

- **आगायति** । सः दाल्भ्यो बकः एभ्यो नैमिषीयेभ्यो यजमानेभ्यः
[वृष्ट्या]दीन् कामान् गानेन विद्यामाहात्म्यात् संपादितवानित्यर्थः । **आगायति**
[ल]ट् स्मे ' इति 'भूते लट् ।

**आगाता—उपास्ते** । एवमुपासको यजमानकामानां गानेन संपादयिता भवती-
त्यध्यात्मम् । अध्यात्ममुद्गीथोपासनं समाप्तमित्यर्थः । आत्मशब्देन इन्द्रिय-
[ा]दिसंघात उच्यते । **अध्यात्मम्** आत्मनीत्यर्थः । आत्मविषयमिति यावत् ।
(१) एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणं लिख्यते । –अङ्गपादे–'ऋत्वि-
[ग्विष]याङ्गानुष्ठानमात्रार्थत्वात् , अङ्गावबद्धोपासनानाञ्च, ' तन्निर्धारणानियमस्तद्दृष्टेः
[पृथग्घ्यप्रति]बन्धः फलम् ' इति सूत्रोक्तन्यायेनानङ्गत्वात् , ' शास्त्रफलं प्रयोक्तरि '
न यजमानगामिफलसाधनभूतोपासनस्य यजमानेनैव कर्तव्यत्वात् , ' गो-
[प]शुकामस्य प्रणयेत् ' इति श्रुतपश्वर्थगोदोहनादेरनङ्गत्वेऽपि ऋत्विक्कर्तृ-

लट् भूतेऽपि. ख. ग.

---

विवक्षणीयम् । आदितः प्रभृति विद्युपास्त्यारेकार्थ एव प्रयोगदर्शनादत्रैव तद् विव-
आगाता भवति । य उपास्ते ' इति तदुत्तरवाक्ये आगानोपासनयोर्भिन्नत्वप्रतीतेश्च ।
[ङ्ग]पाद इति । एतत्खण्डान्तिमवाक्यव्याख्यानावसरे तद्विषयकाधिकरणस्योपस्थित-
सूचीकटाहन्यायाच्च प्रथममेतदधिकरणोपन्यासः । **शास्त्रफले प्रयोक्तरीति** ।
[४५]–७) इदं पूर्वपक्षसूत्रम् । अत्राधिकरण एव फलस्य यजमानगामित्वेऽपि
बलात् , यत् ऋत्विजा कर्तुं शक्यम् , तत् तेनैव कार्यमिति निर्णीतम् । अतोऽत्र
नेत्यस्य इत्यधिकरणन्यायेनेति नार्थः, विरोधात् । किंतु एतत्सूत्रोक्तयुक्त्येत्यर्थः ।
फलमनुष्ठातृगतं यजेत स्वर्गकाम इत्यादावात्मनेपदबलात् प्रतीयते । आत्मनेपदस्य कर्तृ-
लपरत्वात् । अत्राप्युद्गीथमुपासीतेत्यात्मनेपदमस्तीति युक्तिः । स्वार्थे स्वयं प्रवृत्तिरेव लोके
। च । अङ्गावबद्धोपासनं फलस्वामिकर्तृकम् उपासनत्वात् भक्तिविद्यावदिति श्रीभाष्य-
संधेयम् । ननु पूर्वमीमांसाधिकरणेनैव परिक्रीतकर्तृकत्वं सिध्यतीति शारीरकाधि
[इ]ति चेत् – उच्यते । नियमेन कर्तव्यस्य ऋत्विग्वरणस्य, नियमेन यत् कर्तव्यम् ,
युक्तम् । एवंभूतमेव ऋत्विजा क्रियते । यद्यपि गोदोहनादिद्रव्यं फलार्थत्वात्
तथापि प्रणयनादिक्रियायाः द्रव्यादिकमन्तरेणानिवृत्तेः अपेक्षितद्रव्यस्याद्याकारेण

का[1]प्रणयननिर्वर्तकस्य गोदोहनस्य यजमानेनोपादातुमशक्यतया ऋत्विक्कर्तृ उद्गातृकर्तृके उद्गीथे यजमानस्योपासनसंभवात् उपासनं याजमान[2]मेव । समाख्यानं तु, 'शास्त्रफलं प्रयोक्तरि' इति न्याय[3]विरोधादुपेक्षणीयम् । फलस्य स्वामिगतत्वात् फलस्वामियजमानकर्तृकमेवोपासनमित्यात्रेयमतमिति, मिनः फलश्रुतेरित्यात्रेयः' इति सूत्रेण पूर्वपक्षं कृत्वा — उपासनान्यपि त्र र्माण्येव[4] स्युः । प्रयोगाङ्गस्य ऋत्विजः प्रयोगान्तःपात्युद्गीथाद्युपासनेऽपि कर्तृ वात् । 'तं ह बको दाल्भ्यो विदाञ्चकार । स ह नैमिषीयाणामुद्गाता बभूव । स्मैभ्यः कामानागायति' इति उद्गातृदाल्भ्यगतविद्याया यजमानकामसंपा दर्शनलिङ्गाच्च ऋत्विक्कर्तृकमेवोपासनम् । न च ऋत्विक्कर्तृकोपासनस्य फलं गतमेव स्यादिति[5] शक्यशङ्कम् — ऋत्विजां परार्थतया तेषां वचनमन्तरेण संबन्धानुपपत्तेः । 'यां वै काञ्चन यज्ञे ऋत्विज आशिषमाशासते, यजम वैतामाशिषमाशासते' इति श्रुतेश्च । 'तस्मादु हैवंविदुद्गाता ब्रूयात् क ते मागायानि' इति ऋत्विग्गतविज्ञानस्य यजमानगामिफलकत्वावेदनलिङ्गाच्च न, ' फलं प्रयोक्तरि' इति न्यायावतारः । ततश्च परिक्रयविधिबलादुत्सृष्टस्य ऋत्वि कत्व[6]स्य याजमान समाख्याद्यपवादकाभावात्, लिङ्गानुग्रहात्, औद्दालसम नाच्च आर्त्विज्यमेवोपासनमिति, 'आर्त्विज्यमित्यौडुलोमिः, तस्मै हि परिक्री इति सूत्रेण सिद्धान्तितम् । सूत्रस्य चायमर्थः — उपासनमार्त्विज्यम् त्र

1 कर्तृकप्रणयन ख. ग. 2. यजमानकर्तृक. ग. 3. न्यायेन. ख. 4. ' इति क. नास्ति । 5. शङ्क्यम् क. 6. ऋत्विक्कर्तृकस्य याजमानसमाख्यापादकाभावा

नियतत्वमस्त्येव । उद्गीथाद्युपासनं तु सर्वथैवानियतम्, कर्मानुपकारकत्वादिति नेदम तदातदा यजमानेनाद्रियमाणं नियतकर्मप्रवृत्तः ऋत्विगनुष्ठास्यति । किञ्चानियतमपि गोदो न यजमानशक्यप्रयोगम् । तथात्वे ऋत्विक्कर्तृकप्रणयनाद्यनिष्पत्तेरिति तत्र कामं तथ त्वत्रेत्यधिकाशङ्का । कर्तॄणां प्रयोगाङ्गत्वात् प्रयोगमध्यपातिसर्वार्थमेव वरणमिति सिद्धान्त्याशय

**न्यायविरोधा**दिति । न केवलं न्यायः, अत्रोपरि, 'एतमु एवाहमभ्यगासिषम् । न्ममत्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच' इत्यादौ उपासकस्योद्गातुरेव फलवर्णनाद् मप्यनुकूलमिति शङ्कितुराशयः । सिद्धान्ते 'अभ्यगासिष' मित्यत्र उद्गातृद्वारा यजमानं मगासिषमिति विवक्षा स्यात् । **उत्सृष्टस्य** उत्सर्गसिद्धस्य ।

तस्मै क्रतुप्रयोगाय[1] हि ऋत्विक् परिक्रीयते । अतोऽनङ्गभूतमप्युपासनं गान्तःपातित्वात् ऋत्विजैवानुष्ठेयमिति स्थितम् ॥

(२) तथा गुणोपसंहारपादे [ च ] चिन्तितम् — तत्र हि —

वाजिनां तावत् , ' द्वया ह वै प्राजापत्या देवाश्चासुराश्च ' इत्यारभ्य, ' ते ऊचुः, हन्तासुरान् उद्गीथेनात्ययाम ' इत्युद्गीथेनासुरविध्वंसनं प्रतिज्ञाय वागादिमनःपर्यन्तदृष्टौ असुरैरभिभवमुक्त्वा, ' अथ हेममासन्यं प्राणमूचुः ' ॥ उद्गीथे प्राणदृष्ट्या असुरपरिभवमुक्त्वा, ' भवत्यात्मना, पराऽस्य द्विषन् भवति, य एवं वेद ' इति शत्रुपराजयफलाय उद्गीथे प्राणदृष्टिर्विहिता ।

एवं छन्दोगानामपि — ' देवासुरा ह वै यत्र संयेतिरे ' इत्यारभ्य, ' तद्ध ीथमाजह्रुः । अनेनैनान् अभिभविष्याम इति ' इत्युद्गीथेनासुरपराभवं प्रति- ;देव उद्गीथे वागादिदृष्टौ दोषमभिधाय, ' अथ ह य एवायं मुख्यः प्राणः, ुपासाञ्चक्रिरे ' इत्यादिना उद्गीथे प्राणदृष्ट्या असुरपराभवमुक्त्वा, ' यथाऽ- ाणमृत्वा विध्वंसते, एवं हैव स विध्वंसते य एवंविदि पापं कामयते ' इति ाथयोद्गीथे प्राणदृष्टिर्विहिता ।

तत्र उभयत्रा[2] प्यध्यस्तप्राणभावस्योद्गीथस्यैवोपास्यत्वश्रवणेन रूपाभेदात् , वरूपफलसंयोगाविशेषात्, उद्गीथविद्येति समाख्यैक्याच्च तयोरैक्यमिति ः । तत्र राद्धान्तच्छायया परिचोद्य परिहरति — ' अन्यथात्वं शब्दादिति ेषात्' । वाजसनेयके, ' ते हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति । तथेति । प्राण उदगायत्' इति उद्गानकर्तरि प्राणदृष्टिविधानात् , छान्दोग्ये, ' अथ ायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे ' इति उद्गानकर्मणि प्राणदृष्टिविधा- दादुपास्यरूपान्यथात्वप्रतीतेः भेद इति चेत् — न, देवासुरसंग्रामोपक्रमादि- यात् । वाजसनेयकेऽपि, ' हन्तासुरान् यज्ञे उद्गीथेनात्ययाम ' इत्युद्गीथेनो- न्तदविरोधाय, ' तेभ्य एष प्राण उदगायत्' इति उद्गानकर्मरूप एवोद्गीथे— सौकर्यातिशयविवक्षया, ' पच्यते ओदनः स्वयमेव ' इति ओदने कर्तृ- ात्—उद्गानकर्मण्येव कर्तृत्वोपचारोपपत्तेरुद्गीथ एवोभयत्राप्युपास्यः । अतो ् — इति प्राप्ते —

[1] प्रयोजनाय· ग. [2] अपिः क. कोशे ।

प्रचक्ष्महे —, 'न वा प्रकरणभेदात् परोवरीयस्त्वादिवत्'। **न वेति**
व्यावर्तयति। **प्रकरणभेदात्** — छान्दोग्ये, ओमित्येतदक्षरमुद्गीथमुपासी
प्रकृतोद्गीथावयवप्रणवविषयकमुपासनम्। वाजसनेयके प्रणवस्याप्रकृतत्वात्,
नात्ययाम' इति कृत्स्नोद्गीथस्यैव प्रस्तुतत्वात् कृत्स्नोद्गीथविषयकमेवोप
अतो रूपभेदाद्विद्याभेदः। किञ्च छान्दोग्ये उद्गीथस्याध्यस्तप्राणभावस्योपा
वाजिनां तु, अथ हेममासन्यं प्राणमूचुः त्वं न उद्गायेति, तथेति तेभ्य
उदगायत्' इति अध्यस्तप्राणभावस्योद्गातुरुपास्यत्वम्। न च वाजसनेयके
पास्यत्वे, 'उद्गीथेनात्ययाम' इत्युपक्रमविरोधः शङ्कनीयः। उद्गातुरुपासने
स्यानुप्रविष्टतया उपक्रमावगतस्योद्गीथस्यापरित्यागात्। अत्र च वक्तव्यं **बृहद्**
**प्रकाशिकायामुक्तं** तत्रैवानुसंधेयम्।

'संज्ञातश्चेत्तदुक्तम्, अस्ति तु तदपि'। ननु उद्गीथविद्येति
विद्यैक्यमुक्तमिति चेन्न — **तत्** संज्ञैक्यं विधेयभेदेऽप्यस्त्येव; यथा अग्नि
नित्याग्निहोत्रे कुण्डपायिनामयनाग्निहोत्रे च। छान्दोग्यगतप्रथमप्रपाठकोदिता
विद्यासु उद्गीथविद्येति संज्ञैक्यस्य दर्शनाच्च तदप्रयोजकमिति भावः। '
समञ्जसम्'। छान्दोग्ये प्रथमप्रपाठके उत्तरास्वपि विद्यासु, 'ओमित्येतदक्ष
मुपासीत' इत्यादिषु उद्गीथावयवस्य प्रणवस्य व्याप्तत्वेन तन्मध्यपातित्वाद
विद्याया उद्गीथावयवप्रणवविषयत्वमेव। ततश्च छान्दोग्यवाजसनेयकयोर्बहुश

---

**उद्गीथस्यानुप्रविष्टतयेति**। उद्गातरि प्राणदृष्टिर्नाम नोद्गातारं चैत्रत्वादिना गृह
प्राणदृष्टिः; किन्तु उद्गातृशब्दप्रवृत्तिनिमित्तभूतोद्गीथकर्मकगानकर्तृत्वाकारेण गृहीत्वा। अत
पा..तावच्छेदकत्वात् फलप्रयोजकत्वमिति। **अत्र च वक्तव्यमिति**। बृहदारण्यके, 'उ
यामे' त्यत्र उद्गीथपदं उपरितनबहुवाक्यानुरोधादुद्गातृलक्षकम्' यद्वा भाष्यतट्टी
दुक्तरीत्यैव लक्षणां विना निर्वाह इति पक्षद्वयमित्यर्थः। **परोवरीयस्त्वादिवत्** इति
स्य हिरण्मयत्वविशिष्टपुरुषदृष्टेर्यैक्यं यथा परोवरीयस्त्वविशिष्टतद्दृष्टौ न, तद्वदित्यर्थः।

**संज्ञात इति**। संज्ञातश्चेत्तदुक्तमित्येकं वाक्यम्; शङ्कानुवादरूपम, 'तत्
संज्ञैक्यप्रयुक्तमुक्तं चे' दिति।

**तन्मध्यपातित्वादिति**। यद्यप्यत्रैव, 'य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते'
क्षरपदं कृत्स्नोद्गीथव्यावर्तकं स्पष्टमुपसंहारे श्रूयते — अथापि प्रथमखण्डे उपक्रमेऽप्य
णात् तस्य खण्डस्य प्रणवमात्रविषयकत्वेऽपि द्वितीयखण्डे सामान्यत उद्गीथशब्दस्यै
तस्य कृत्स्न एव मुख्यत्वात् उपक्रमानुसारेणोपसंहारो नेय इति शङ्कायां तृतीयेऽपि अ

१—३

**अथाधिदैवतम् — य एवासौ तपति, तमुद्गीथमुपासीत। उद्यन् वा एष प्रजाभ्य उद्गायति; उद्यँस्तमोभयमपहन्ति; अपहन्ता ह वै भयस्य तमसो भवति, य एवं वेद ॥ १ ॥**

---

छान्दोग्यगतविद्याया अध्यस्तप्राणभावोद्गीथावयवप्रणवविषयत्वात्, वाजसनेयकोद्गीथविद्यायाश्चाध्यस्तप्राणभावोद्गानकर्तृविषयत्वात् प्रधानभूतोपास्यभेदे बह्वर्थसाम्यस्याप्रयोजकत्वात् विद्याभेद इति स्थितम्। प्रकृतमनुसरामः ।—१-२.

**अथाधिदैवतम्**। उद्गीथस्योपासनमुच्यत इति शेषः। **अधिदैवतम्** मेत्यर्थः। देवताविषय[1]कमिति यावत्। **य—मुपासीत**। आदित्यदृष्ट्या ...सीतेत्यर्थः। कर्माङ्गभूतोद्गीथापेक्षया कर्माराध्यस्याऽऽदित्यस्योत्कृष्टत्वात्, उत्कृष्टदृष्टेरेव न्याय्यत्वादादित्यदृष्ट्योद्गीथस्योपास्यत्वं द्रष्टव्यम्। अयमर्थः, ...त्यादिमतयश्चाङ्ग उपपत्तेः" इत्यधिकरणसिद्धः। तच्चाधिकरणं **बृहदारण्यक**...कायामुपन्यस्तं तत्रैवानुसंधेयम्।

उद्गीथेऽध्यस्यमानस्यादित्यस्योद्गीथसाम्यमाह—**उद्यन्—गायति**। वैशब्दोऽव... **एषः** आदित्यः **उद्यन्** उद्गच्छन्नेव प्रजानामर्थप्रकाशनं कुर्वन् उद्गायतीव उद्गीथोऽपि प्रजानामुद्गायतीव भवतीत्यर्थः। **उद्यन्—हन्ति**। उद्यन्ने... तमोजनितं प्राणिनां भयमपहन्तीत्यर्थः। तमोभयापहन्तृत्वगुणविशिष्टतया आदित्योपासनस्य फलमाह—**अपहन्ता—वेद**। अन्धकारादिप्रयुक्तभया[2]प... ...वतीत्यर्थः।

1. विषयं ख. ग. 2. भयहन्ता. ख.

---

...मध्येऽपि तद्विषयकत्वमेव स्थाप्यत इति ध्येयम्। अत्राधिकरणे द्वितीयसूत्रं उद्गातृ... बृहदारण्यके उद्गीथविधेति कथं संज्ञेति शङ्कापरिहारपर्यवसायि; तृतीयसूत्रं छान्दोग्य... कृत्स्नोद्गीथविषयत्वमिति शङ्कावारकमिति, 'गाता गेयञ्च गेये सकलमसकलञ्च' इति ...द्वयस्थापनप्रधानं सूत्रद्वयमिति विमृश्यम्।

उद्गायतीव भवतीति। ननु उद्गायन्निव भवतीति युक्तं प्रयोक्तुम्। न तु तिङन्तोपरि ...तीति चेन्न – पचति भवति, पक्ष्यति भवतीत्यादिप्रयोगस्य महाभाष्ये दर्शितत्वात्, तथै... ...र्थनसंभवात्।

**समान उ एवायञ्चासौ च ; उष्णोऽयम्, उष्णोसौ ; स्व ममाचक्षते, [1]स्वर इति प्रत्यास्वर इत्यमुम् ; तस्माद्वा एतमिम द्गीथमुपासीत ॥ २ ॥**

**अथ खलु व्यानमेवोद्गीथमुपासीत ; यद्वै प्राणिति स यदपानिति सोऽपानः ; अथ यः प्राणापानयोः संधिः स व्यानः**

**यो व्यानः सा वाक् ; तस्मादप्राणन् अनपानन् वाचमभि रति ॥ ३ ॥ या वाक् सर्क् ; तस्मादप्राणन् अनपानन् ऋचमभि**

1. 'स्वरइति' इतीदं न माध्वे । 2. वाकारपाठः ख. कोशे.

---

**समान—चासौ च ।** [1]अयम् अध्यात्मप्रकरणे उक्तः प्राणश्च अधिदैवतप्रकरणे उच्यमान आदित्यश्च समान एवेत्यर्थः । तदेव दर्श **ष्णो—ऽसौ** । अयं प्राण उष्णः । उच्छ्वासस्योष्णतयोपलभ्यमानत्वात् । सौ । सवितुश्चोष्णत्वं स्पष्टमेवेति भावः । **स्वर—इत्यमुम्** । इमं प्रा इत्याचक्षते । **स्वरः** गन्तेत्यर्थः । स्वृ शब्दोपतापयोः इत्यस्मात्, धातूना त्वात्, कर्तरि अचि रूपम् । अमुं आदित्यं स्वर इति प्रत्यास्वर इति च उदयास्तमययोः गमनप्रत्यागमन[2]सत्त्वात् । प्राणस्य वायुरूपतया सदागतित्वे गमनाभावान्न प्रत्यास्वरसंज्ञेति भावः । अतः स्वरसंज्ञावत्त्वात् औष्ण्याच्च प्रा परस्परसमानावित्यर्थः । **तस्मात्—मुपासीत** । **तस्मात्** उभयोरपि समत्व प्राणं वा अमुमादित्यं वा एतम् एतादृशगुणकमुद्गीथमुपासीत । उद्गीथे मुपासीतेत्यर्थः ।

प्रकारान्तरेणोद्गीथोपासनमाह—**अथ—मुपासीत** । उद्गीथं व्यान

1. ख. ग. कोशयोः अयंपदं प्राणपदात् पूर्वं असौपदं आदित्यपदात् पूर्वञ्च प
2. वत्त्वात्. ग.

---

**इमं प्राणं वे**ति । अत्राध्यात्ममुपासनमधिदैवतमुपासनञ्च पृथक्फलसाधनतया गनुष्ठेयमिति प्राणादित्ययोरुपासने कथमपि समुच्चयप्रसक्त्यभावात् इममग्नुञ्चेति मूले चव ऽपि वाकारार्थ उक्तः ।

मुख्यमासन्यं प्राणमुद्गीथमुपासीतेत्युक्तम् । अथ व्यानदृष्टिर्विधीयते । अत्र फल

साम; तस्मादप्राणन् अनपानन् साम गायति; यत् साम स
तस्मादप्राणन् अनपानन् उद्गायति ॥ ४ ॥

ातो यान्यन्यानि वीर्यवन्ति कर्माणि, यथा—अग्नेर्मन्थ[1]नम्,
रणम्, दृढस्य धनुष आयमनम्—, अप्राणन् अनपानँस्तानि
एतस्य हेतोर्व्यानमेवोद्गीथमुपासीत ॥ ५ ॥

ाथ खलूद्गीथाक्षराण्युपासीत, उत् गी थ इति। प्राण एव उत्;

मथनं. मा.

। को व्यान इत्यत्राह—यद्वै—व्यानः। पुरुषो मुखनासिकेन [1]यत् यं वायुं
बहिर्निःसारयति, सः प्राणाख्यो वायोर्वृत्तिविशेषः। मुखनासिकेन यं वायुमन्त-
सोऽपानाख्यवृत्तिविशेषः। तयोरन्त[2]रालवृत्तिविशेषरूपः संधिः व्यान इत्यर्थः।
उद्गीथे व्याना[3]ध्यासहेतुमाह—यो व्यानः सा वाक्। वाचो व्याननिर्व-
ाक् व्यान एवेत्यर्थः। वाचो व्याननिर्वर्त्यत्वे युक्तिमाह—तस्मात्—व्या-
तस्मात् वाचो व्याननिर्वर्त्यत्वादेव हेतोः अप्राणन् अनपानन् श्वासमोक्षा-
णप्राणापानौ विनैव [[4]तत्संधिरूपया व्यानवृत्त्या] वाचमभिव्याहरतीत्यर्थः।
द्गायति। अप्राणता अनपानता पुंसा क्रियमाणत्वादेव व्यानस्य वागृचसा-
ङ्गैक्यमित्यर्थः।

अतो—मुपासीत। लोके अग्निमथनमर्यादाधावन-दृढधनुरारोपणादि-वीर्य-
[5] व्यानसाध्यान्येव। अतो हेतोः उद्गीथाख्यवीर्यवत्कर्मणोऽपि व्यानसाध्य-
ानमेवोद्गीथमुपासीतेत्यर्थः॥

अथ—थ इति। उत् गी थ इति त्रीणि उद्गीथनामानुप्रविष्टाक्षराण्येवोपा-
ः। प्राण एव उत्। उदित्यक्षरे प्राणबुद्धिः कार्येत्यर्थः। तत्र हेतु[6]माह

. प्राणितिपदं यमित्यतः पूर्वं ख. ग. कोशयोः। 2. 'तयोरन्तरा आन्तरवृत्ति' 'तयोरन्तर्वृत्ति' इति—ग. तयोरान्तर्वृत्ति. घ. 3. अध्यासे इति सप्तमी क. 4. नेदं क कोशे। 5. वीर्यवत्तराणि कर्माणि. ग. 6. तत्र हेतुः ग.

ीर्यवत्तरत्वमित्युक्तं शाङ्करे। अतो यान्यन्यानीति। अतोऽन्यानीत्यन्वयः। एतद्भिन्ना-
। अभिव्याहारति, उद्गायतीति संप्रयुक्तवागिन्द्रियकार्यभिन्नानीति यावत्। मर्यादाधा-
'आजिर्मर्यादा। सरणं धावनम्' इति शाङ्करम्।

प्राणेन ह्युत्तिष्ठति ; वाग् गीः ; वाचो ह गिर इत्याचक्षते ; अन्नं अन्ने हीदँ सर्वँ स्थितम् ॥ ६ ॥

द्यौरेव उत्, अन्तरिक्षं गीः, पृथिवी थम् ; आदित्य ए वायुर्गीः, अग्निः थम् ; सामवेद एव उत्, यजुर्वेदो गीः, ऋग्वेद दुग्धेऽस्मै वाग् दोहम्, यो वाचो दोहः, अन्नवान् अन्नादो भव एतान्येवं विद्वान् उद्गीथाक्षराण्युपास्त उद् गी थ इति ॥ ७ ॥

---

**प्राणेन ह्युत्तिष्ठति** । स्पष्टम् । **वाग् गीः** । गी [1]इत्यक्षरे वाग्बुद्धिः कार्या हेतुः **वाचो—चक्षते** । वाचो गीश्शब्दवाच्यत्वात् गी इत्यस्य वागध्यासा त्वमुपपद्यत इति भावः । **अन्नं थम्** । थमि (थ इ?) त्यक्षरे अन्नबुद्धिः कर्तव्यं तत्र हेतुः[3] **अन्ने—स्थितम्** । अन्नस्य सर्वस्थानत्वेन थकारवत्त्वसाम्यात् अन्नबुद्धिर्युज्यत इति भावः ॥ प्रकारान्तरेणोद्गीथाक्षरोपासनमाह **द्यौरेव—** **थम्** । [[4]उदक्षरे द्युलोकादित्यसामवेददृष्टिः, गीर (गी अ?) क्षरे अन्तरिक्षव वेददृष्टिः, थम (?) क्षरे पृथिव्यग्निऋग्वेददृष्टिश्च कार्येत्यर्थः । उक्तस्य चतु द्गीथनामाक्षरोपासनस्य फलमाह] **दुग्धेऽस्मै वाग् दोहम्** । वाक् असौ उ दोहं दोग्धि[5] । कं दोहमित्यत्राऽऽह **यो वाचो दोहः** । वाक्साध्यं फलमि फलान्तरमप्याह **अन्नवान् अन्नादो भवति** । प्रभूतान्नो दीप्ताग्निश्च भवती **य—इति** । स्पष्टोऽर्थः ॥

1. घ. कोशेऽयं पाठः । अन्यत्र सर्वत्र गीरित्यक्षरे इति. 2. ख. ग. को वाक्यं न । 3. हेतुमाह ख. 4. इदं कुण्डलितं न क. घ. कोशयोः । क उदित्यादि थमित्यन्तं स्पष्टमिति, घ कोशे स्पष्टोऽर्थ इति चास्ति । अत्र गीर्, थम् रेफमकारान्तानुकरणञ्च चिन्त्यम् । 5. दोग्धीत्यर्थः ख.

---

एवं अर्थे काश्चित् दृष्टय उक्ताः; वक्ष्यन्ते च । मध्ये वाचकशब्दे दृष्टिरुच्यते । त रूपे वाचकशब्दे वर्णत्रयपृथक्कारेण चतुर्धा दृष्टिरुच्यते वागन्नादिसिद्धिफला । बृहदारण्य ग्विशिष्टप्राणं प्रस्तुत्य, प्राणः उत्, वाक् गीथा इति द्वेधा विभागमात्रं कृतम् (१—३ ननु किमिति मध्ये वाचकशब्दे दृष्टिविचार इति चेत् — उच्यते । विशिष्योद्गीथमात्रे दृष्टिरुक्ता । अथ तु प्रणवत्वेन सामत्वेन वा सामान्याकारेण, तथा सामशब्दघटकाक्षरवि सामान्यतः सामविचारपूर्वं चोद्गीथचिन्तनानि वक्ष्यन्ते । अतो विशेषभूतार्थदृष्टेरनं विशेषनामदृष्टिः प्रस्तूयत इति युक्तमिति ।

अथ खल्वाशीःसमृद्धिरुपसरणानीत्युपासीत — येन साम्ना
[ स्यात्, तत् सामोपधावेत् ॥ ८ ॥
यस्यामृचि, तामृचम्; यदार्षेयम्, तमृषिम्; यां देवतामभि-
स्यात्, तां देवतामुपधावेत् ॥ ९ ॥
येनच्छन्दसा स्तोष्यन् स्यात्, तच्छन्द उपधावेत्; येन स्तोमेन
माणः स्यात्, तँ स्तोममुपधावेत् ॥ १० ॥
यां दिशमभिष्टोष्यन् स्यात्, तां दिशमुपधावेत् ॥ ११ ॥
आत्मानमन्तत उपसृत्य स्तुवीत कामं ध्यायन् अप्रमत्तः। अभ्याशो

---

अथ—त्युपासीत । आशीस्समृद्धिहेतुभूतानि उपसरणानि उपासना-
त्वोपासनं कुर्यादित्यर्थः । केषामुपासनं कार्यमित्यत्राह—येन- —धावेत् ।
त् चिन्तयेत् । उपासीतेत्यर्थः[1] । यस्यामृचि तामृचम् । यस्यां ऋचि
तोष्यन् स्यात्, तामृचं चिन्तयेदित्यर्थः । यदार्षेयम्, तमृषिम् । ऋषि-
आर्षेयम् । [2]ऋषिदृष्टमित्यर्थः । यस्यार्षेयं यदार्षेयम् । शिवभागवतवत्
। साम यदृषिकम्, तमृषिं चिन्तयेदित्यर्थः । यां—धावेत् । स्पष्टम् ।
धावेत् । छन्दः गायत्र्यादिकमित्यर्थः । येन स्तोमेन— धावेत् । स्तोमः
दशादिलक्षणः ऋक्संख्याविशेषः । यां—धावेत् । यद्दिगभिमुखतया
स्यात्, तां दिशञ्च ध्यायेदित्यर्थः । आत्मानं—अप्रमत्तः । उक्तं सर्वं
अन्ततः अन्ते आत्मानमपि [च] उपसृत्य ब्रह्मात्मकं ध्यात्वा कामं
इष्टं ध्यायन् अप्रमत्तः अवहितः = स्वरवर्णाद्यभ्रेषानुकूलमनोवधानयुक्तस्सन्

1. एतदनन्तरं 'शिष्टं स्पष्टम् इति ख. कोशे । 2. इदमर्थवर्णनं ख. कोशे न ।

---

ाशीस्समृद्धिः आशिषः समृद्धिः । 'अन्नं वै प्राणाः' इतिवत् उपचारात् समृद्धिहेतु-
र्थलाभः । इति इत्यस्य इति मत्वेत्यर्थः । शाङ्करे तु आशीस्समृद्धिरित्येतदनन्तरं
इति शेषपूरणं कृतम् । उपसरणानि उपसर्तव्यानि ध्येयानि, इति वक्ष्यमाणप्रकारेण
व्याख्यातम् । उपसरणपदं वक्ष्यमाणोपधावनोपसरणोभयपरम् । सामादीनां बहिः-
प्रकर्षात् उपधावनमुक्तम् । आत्मनस्तु अन्तर्यात्वात् उपसृत्येति उपसरणमेवोक्तम् ।
कं ध्यात्वेति । ननु ब्रह्मात्मकत्वं कुतो लभ्यते । यावता शाङ्करे, 'आत्मानं स्वं रूपं
दिभिः' इत्येव व्याख्यातमिति चेत् — स्वफलार्थं केवलस्वात्मध्यानं न सम्भवतीति एत-

ह यदस्मै स कामः समृध्येत, यत्कामः स्तुवीतेति यत्कामः
तेति ॥ १२ ॥

इति प्रथमाध्याये तृतीयः खण्डः ।

---

## १—४.

**ओमित्येतदक्षरमुद्गीथमुपासीत; ओमिति ह्युद्गायति । तस्य
ख्यानम् ॥ १ ॥**

**देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशन्; ते छन्दोभिर**

---

बहिष्पवमानादिस्तोत्रमारभेतेत्यर्थः । **अभ्याशो—स्तुवीतेति** । यत्
[एवंवित्] स्तोत्रं करोति, स कामः यस्मात् कारणात् **अभ्याशः** क्षिप्रं स
समृद्धिं प्राप्नोतीत्यर्थः । अभिआङ्पूर्वात् अश्नोतेः[1] असुनि अभ्याश
रूपम् । क्षिप्रफलसिद्धिरुपसरणफलमित्यर्थः । द्विरुक्तिर्विद्यासमाप्त्यर्था ॥ १

**ओमित्येतत्—व्याख्यानम्** । पूर्ववदर्थः । अत्रोक्तस्यैवोद्गीथो
पुनःपरामर्शो मध्ये उद्गीथनामाक्षराद्युपासना[2]न्तरितत्वादिति द्रष्टव्यम् । **देवाः**
**विशन्** । देवाः मरणभीताः [सन्तः] वैदिकं कर्म प्रारब्धवन्त इत्यर्थः । **ते**

1. अश्नातेः क. 2. अयं क पाठः । नामाक्षराद्युपासनया ग नामाक्षरोपासनया

---

मुक्तमिति । यद्वा **सर्वं ध्यात्वा अन्ते आत्मानमप्युपसृत्येत्युक्त्वा** तत्र 'आत्मान
त्यस्य ब्रह्मात्मकं ध्यात्वेति तात्पर्यार्थ उक्तः । तेन उक्तं सर्वं ब्रह्मात्मकं ध्यात्वेत्युक्तं भवति
च **आत्मान**मित्यस्य सर्वनामरूपपर्यवसानभूमिं परमात्मानमित्यर्थः । **अन्ततः** द्वारभूत
न्तनानन्तरम् । **उपसृत्य** । पूर्वं यत्र यत्रोपधावितम् तत्रतत्रैवास्यान्तःस्थित्या पुनश्च
स्तव्यभावादुपसरणमेवोक्तम् ॥ पूर्वोक्तदृष्टीनां आशिषः प्रबलकर्माप्रतिबन्धादि फलम्
तु उपसरणानामाशिषः क्षिप्रसमृद्धिः फलम् । **समृद्धिः** पौष्कल्यम् । आत्मानमिति
कत्वध्यानस्याप्युक्तत्वाद्धि न किञ्चिद्वैकल्यप्रसक्तिः । उक्तं हि **श्रीमति रहस्यत्रयसारे**
वतापारमार्थ्याधिकारे, 'यथावदविज्ञाय करणे फलानि विकलानि; भगवच्छरीरत्वादि
करणे च पूर्णानि ' इति । एवमेकैकोपधावनस्यापि अन्तरात्मभूतपरमात्मोपसरणाक
**उपसरणानि** इत्येवादौ उपनिषदि श्रुतम् ॥ इमानि चोपसरणानि सर्वविद्याशेषभूता
रीत्या विशिष्योद्गीथविद्याविधानस्यात्रावसितत्वात् इहापि तदावश्यकत्वज्ञापनाय संप्रत्युक्तानि
**देवा वै** इति । लोके कुतश्चिद्भीताः जनाः क्वचिद् गह्वरे प्रविश्य लीना स

[दे]भिरच्छादयन्, तत् छन्दसां छन्दस्त्वम् ॥ २ ॥

तानु तत्र मृत्युः, यथा मत्स्यमुदके परिपश्येत्, एवं पर्यपश्य-
[द]स्मि यजुषि । ते नु विदित्वोर्ध्वा ऋचः साम्नो यजुषः स्वरमेव
[विशन्] ॥ ३ ॥

यदा वा ऋचमाप्नोति, ओमित्येवातिस्वरति; एवँ साम; एवं
एष उ स्वरः; यदेतदक्षरमेतदमृतमभयं तत् प्रविश्य देवा अमृता

---

दयन् । छन्दोभिः कर्मविनियुक्तैर्वैदिकैर्मन्त्रैः मृत्युभीताः सन्त आत्मानं
[न] इत्यर्थः । वैदिकमन्त्रकञ्चुकच्छन्ना इति यावत् । यत्—छन्दस्त्वम् ।
[ए]व [1]छन्दसां छन्दस्त्वमित्यर्थः । तानु—यजुषि । उशब्दो निरर्थकः ।
[ता]न् कर्मपरान्, यथा मत्स्यग्राही उदके मत्स्यं परिपश्यति, एवं मृत्युः
[र]त[2]कर्मानुप्रविष्टान् कर्मशेष[3]समयं प्रतीक्ष्य ग्रहीतुमैच्छदित्यर्थः । ते
[प्रा]विशन् । ते देवाः मृत्योश्चिकीर्षितं ज्ञात्वा [ऋक्सामयजूरूप] त्रयीविहित-
[क]र्मभ्यः [4]उद्धृताः कर्मनिर्मलीकृतान्तःकरणास्सन्तः स्वरशब्दितमोंकारमुपासितुं
[इत्य]र्थः । [नुशब्दः खल्वर्थः] । कथं पुनः स्वरशब्दवाच्यत्वमोंकारस्येत्यत्राह—
[य]जुः। यदा वै ऋगादिकं आप्नोति आरभते, तदा ओमिति अतिस्वरति
[उच्चारय]तीत्यर्थः । एष उ स्वरः । तस्मात् एष ओङ्कार[5] एव स्वर इत्यर्थः ।

[1. ]वैदिकमन्त्राणां ख. ग. 2. विहितं ख. ग. 3. भ्रंश. ग. 4. अर्थं ग. घ.
[...]र्ग अधिकाः इति ख. उद्गातारः इति क. 5. एवकारः क कोशे ।

---

[...], ततोऽपि निष्क्रम्य दुर्गं प्रविश्यात्मानं रक्षन्ति इति दृश्यम् । तथा कृतं देवैरिति
तत्र विद्यायाः छन्दसाञ्चामूर्ततया वस्तुतः प्रवेशे छादने च कर्मत्वकरणत्वायोगात्
[इति] दर्शितं वैदिककर्मेत्यादिना । यदा वा ऋचमिति । इदमेव तैत्तिरीयेऽप्युक्तम्—
[वेदादौ] स्वरः प्रोक्तः' इति । तत्र, 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः'
'देवा वै' इत्यादिना सुत्रान्तरेणात्र दर्शितम् । तत्रोक्तस्त्यागश्च आत्मार्पणरूपं
[...]स्य प्रणवस्यार्थ इति । 'स्वरमेव प्राविशन्' इति च तदेवोच्यते । 'ओमित्यात्मानं
एतद्वै महोपनिषदं देवानां गुह्यम्' इति च न्यासघट्टे तत्र । अमृताभयरूपेणोद्गीथा-
[फ]लं तत्र प्रवेशः । तदर्थज्ञानपूर्वकभक्तिप्रपत्तिनिष्पत्तिरिति यावत् । प्रवेशफलममृतत्व-
म् ।

अ[1]भया अभवन् ॥ ४ ॥

स य एतदेवं विद्वानक्षरं प्रणौति, एतदेवाक्षरँ स्वरम
प्रविशति; तत् प्रविश्य, यदमृता देवाः, तदमृतो भवति ॥ ५ ।

इति प्रथमाध्याये चतुर्थः खण्डः ।

---

१—५.

अथ खलु य उद्गीथः स प्रणवः; यः प्रणवः स उद्गीथ इ
वा आदित्य उद्गीथ एष प्रणवः; ओमिति ह्येष स्वरन्नेति ॥ १ ॥

1. अभया इति न माध्वे ।

---

यत्—अभयं । [[1]ओंकार एव मरणभयादिनिवर्तक इत्यर्थः ।] तत्—अ
मरणभयादिनिवर्तकमोंकारं[2] प्रविश्य देवा अमृता अभयाश्चाभवन्नित्यर्थः ।

स य—भवति । य एतदेवाक्षरं स्वरममृतमभयं प्रणौति [3]स्तौति
स्तुताविति [हि] धातुः । उपास्त इति यावत्—, तादृशामृतत्वादिगुणकं प्रण
श्य, देवाः यादृशामृतत्व[4]युक्ताः, [5]स तादृशो भवतीत्यर्थः । १. ४.

प्रणवोद्गीथयोरेकत्वविज्ञानमनेकपुत्रफलकमुपदिश्यते—अथ—इति
द्गाता प्रयुज्यमानो य उद्गीथः उद्गीथावयव ओंकारः, स एव होत्रा प्रयु
प्रणवः । यश्च होत्रा प्रयुज्यमानः प्रणवः, स एवोद्गात्रा प्रयुज्यमान उद्गी
ओंकार इतीतरेतरैक्याध्यासः कर्तव्य इत्यर्थः ।

एवं तयोरैक्यं कृत्वा तत्रादित्यदृष्टिमुपदिशति असौ—प्रणवः ।
मादित्यस्य प्रणवत्वमित्यत्राह—ओं—एति । एषः आदित्यः ओमिति
कर्तव्यकर्मणां ओमित्यनुज्ञां कुर्वन्निवोदेतीत्यर्थः । स्वृ शब्दोपतापयोरि

1. कुण्डलितं ख. कोशे । 2. यदेतदोंकारम् क. 3. प्रणौति उपा
यावत् इत्येव ख. कोशे । 4. त्वादियुक्ताः ख. 5. 'स' इति क. कोशे ।

---

प्रणवोद्गीथयोरेकत्वविज्ञानमिति । होतृषदनवाक्ये एतावन्मात्रोक्त्या तदनुसा
दुक्तम् । आदित्यमुख्यप्राणदृष्टिकरम्बितमेव तद् विवक्षितम् । तथाविधस्यैव पुत्रफलक

अथ खल्विति । उद्गीथे आदित्यत्वं तृतीयखण्डारम्भेऽप्युक्तम् । अत्रोद्गीथप्र
मुपपाद्य प्रणवभूतोद्गीथे रश्मिविशिष्टादित्यदृष्टिर्विधीयते । उद्गीथप्रणवैक्योपदेशः, '

एतमु एवाहमभ्यगासिषम्; तस्मान्मम त्वमेकोऽसि' इति ह
ः पुत्रमुवाच—, 'रश्मी॑ँस्त्वं पर्यावर्तयात्[1], बहवो वै ते भवि·
इत्यधिदैवतम् ॥ २ ॥

थाध्यात्मम् — य एवायं मुख्यः प्राणः, तमुद्गीथमुपासीत;
ह्येष स्वरन्नेति ॥ ३ ॥

एतमु एवाहमभ्यगासिषम्; तस्मान्मम त्वमेकोऽसि' इति ह
ः पुत्रमुवाच—, 'प्राणाँस्त्वं भूमानमभिगायतात्, बहवो[2] मे
ी'ति ॥ ४ ॥

पर्यावर्तयतात् मा. 2. बहवोवैमे शां. बहवोवैते मा.

---

अतः सविता प्रणवः, अत एवोद्गीथश्चेति भावः। एतमु—उवाच।
मेवोद्गीथमहं गीतवानसि। न तु बहुरश्मिगुणविशिष्टतयोपासितवानसि।
। मम त्वमेक एव पुत्रोऽभूरिति कौषीतकिः स्वपुत्रमुवाचेत्यर्थः।
–भविष्यन्ति। तस्मात् त्वं बहुरश्मिविशिष्टादित्यविज्ञानावृत्तिं कुरु। तव
विज्ञानमहिम्ना बहवः पुत्रा भविष्यन्तीत्यप्युवाचेति पूर्वेण संबन्धः।
दिति पुरुषव्यत्ययः छान्दसः। लेटि, "लेटोऽडाटौ" इत्याडागमः।
तम्। उपदिष्टमिति शेषः।

थाध्यात्मम्। उपदिश्यत इति शेषः। य—उपासीत। स्पष्टोऽर्थः।
ते। एष प्राणो वागादिप्राण[1]प्रवृत्त्यथ ओमित्यनुज्ञां कुर्वन्निव संचरति।
ा एव प्रणवः, उद्गीथश्चेत्यर्थः। एतमु—उवाच। पूर्ववदर्थः। प्रा-
ाविष्यन्तीति। मे (मम?) बहवः पुत्रा भविष्यन्तीत्यभिसंधाय मुख्यं
नस्त्वं भूमानं बहुत्वमाश्रितान् वागादीन् प्राणांश्च मुख्यप्राणेन सहाभि-
भिगायतात् उद्गानं कुरु इत्यर्थः।

ाणवृत्त्यर्थं ख.

---

ीथस्यानेकवेदव्यापिप्रणवरूपतया भूमाऽस्तीति ज्ञापनार्थः। बहवो वै ते,' 'बहवो
समानार्थम्। परंतु प्रथमं वाक्यं वक्तृभिप्रायानुवादरूपम्, द्वितीयमनुसंधानभि·
ाम्। अतः ते, मे इति निर्देशभेदः। भूमानमिति। भूमपदस्य बहुत्वमेव
ाथापि महिमादिपदवत् प्राणानिति धर्मिवाचिपदसामानाधिकरण्यमिष्टम्।

अथ खलु — य उद्गीथः स प्रणवः, यः प्रणवः स
इति — होतृषदनाद्धैवापि दुरुद्गीथं[1] (त) मनुसमाहरतीति अनु
तीति ॥ ५ ॥ इति प्रथमाध्याये पञ्चमः खण्डः ।

1. दुरुद्गीतं । मा. शां.

---

उक्तप्रणवोद्गीथैकत्वविज्ञानफलमाह—अथ—समाहरतीति । अपि
वेदनहीनमप्युद्गीथमित्यर्थः । होतृषदनात् होतृकर्तृकोद्गीथप्रणवैक्यज्ञानादि
होतृषदनादित्यत्र, 'पूर्वपदात्—' इति षत्वम् । अयं भावः—उद्गीथप्र

---

दुरुद्गीथमित्यस्य, वेदनविहीनमुद्गीथमित्यर्थस्य श्रीभाष्ये भाषितत्वात् होतृषद
ज्ञानविशेषपरमिति ज्ञापयितुं होतृषदनपदं पश्चाद् व्याख्यातम् । अत्र शाङ्करे, 'हो
स्थानम् । हौत्रात् कर्मण इति फलितार्थः' इति व्याख्यातम् । होतृस्थानसकाशात् दुरु
धानमायातीत्युक्तौ हौत्रकर्मवशाद्भवतीत्यर्थसिद्धेः । दुरुद्गीतमिति पठित्वा, 'उद्गीतमुद्गा
दुष्टत्वं स्वरादिविपर्यय' इति तत्रोक्तम् । हौत्रं कर्म च शंसनाख्यम् । तत्र प्रणवप्रयो
तथाचायमत्र भामतीकल्पतरुदर्शितनिष्कर्षः— उद्गीथप्रणवैक्यविज्ञाने उद्गातृकर्तृके स
त्प्रयुक्तप्रणवघटितहोतृशंसनात् उद्गीथस्य स्वरादिविपर्ययकृतदोषोऽपि परिहृतो भवती
वेदनविधिप्रकरणे वेदनहानिप्रयुक्तदुष्टत्वं तत्परिहारश्च प्राप्तं परित्यज्य स्वरादिविपर्य
पदेशो न सङ्गतः । किञ्चैतादृशार्थादरणेन 'समाहारात्' इति सूत्रे वेदननियमपूर्वपक्षो दु
स्वरादिविपर्ययदोषस्य औद्गात्रज्ञानविशिष्टहोतृशंसनपरिहार्यत्वकथने स्वराद्यावश्यकतैव सि
ज्ञाननियमः, दोषपरिहारकमात्रत्वात् । प्रायश्चित्तवत् । अतो वेदनहीनमुद्गीथमित्यर्थोऽस्मद्
दुरुद्गीथमिति पाठः तद्भाष्यादावपि लक्ष्यते । इति होतृषदनादित्यस्य, इत्यस्मिन्
सति हौत्रशंसनादित्यर्थोऽपि क्लिष्टः । षद्लृ विशरणगत्यवसादनेषु । गत्यर्था बुध्यर्थाः
इति होतृषदनात् इत्याकारकहोतृकर्तृकवेदनादित्यर्थः । एवञ्चोद्गातृकर्तृकोद्गीथप्रण
विहीनमुद्गीथं होतृकर्तृकतादृशवेदनात् समादधातीति विशिष्टार्थः । दुरुद्गीतमिति पाठे
क्त इति प्रकृतोद्गीथग्रहणं सुकरम् । दुरित्यनेन वेदनस्यात्यावश्यकत्वं व्यज्यत इति
अत्र नयमयूखमालिका मतद्वयार्थमिश्रणेन संकुला ।

अत्र श्रुतौ उद्गीथप्रणवैक्यवेदनपूर्वकं उद्गीथे आदित्यादिदृष्टिरूपं वेदनं प्रकृ
होतृकर्तृकैक्यवेदनकृतं समाधानं तत्तुल्याकारकान्यकर्तृकवेदनहानावेव युज्यत इति
विहीनोद्गीथरूपदुरुद्गीथे वेदनस्यैवमाकारकत्वमर्थसिद्धम् । यदि तु पुत्रफलार्थप्रकृतपूर्णवेद
दुष्टत्वं विवक्षितम्, तर्हि, अथ खलु—स उद्गीथ इति इत्यस्य पूर्वोक्तार्थप्रतीक
स्वीकृत्य इति होतृषदनादित्यस्य इत्याकारकोक्तकृत्स्नविषयकहोतृकर्तृकवेदनादित्य
रूपम् । होतृकर्तृकोद्गीथप्रणवैक्यज्ञानादित्येवार्थेऽपि प्रयोज्यत्वार्थिका पञ्चमीति तन्मूल
कपूर्णवेदनं लभ्येत । तथाचोद्गात्रा संकल्पितस्य वेदनस्य तेनाननुष्ठानेऽपि होत्रानुष्ठानं

त्राऽपि कर्तव्यम्; उद्गात्रापि कर्तव्यम्। प्रणवे होतुः, उद्गीथे उद्गातुश्च तत्रोद्गातुरेतादृशैकत्वविज्ञानाभावेन दोषयुक्तमप्युद्गात्रा प्रयुज्यमानमुद्गीथं ोद्गीथप्रणवैकत्वविज्ञानमाहात्म्याद**नुसमाहरति** समादधाति = अदुष्टं करो- **अनुसमाहरतीति** द्विरुक्तिर्विद्यासमाप्त्यर्था।

तत्खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते। गुणोपसंहारपादे — ाथाश्रयभावः'। अङ्गेष्वाश्रितानामुपासनानां क्रतोर्बहिःप्रयोगासंभवेन आश्र- वक्तव्यतया प्रयोगवचनेनाश्रयाणामुद्गीथादीनां समुच्चयनियमेन आश्रि- समुच्चयनियमो युक्तः; इतरथा तदाश्रितत्वानुपपत्तेरित्यर्थः। 'शिष्टेश्च'। न पशुकामस्य प्रणयेत्' इतिवत् अधिकारान्तराश्रवणेन 'उद्गीथमुपासीत' ाङ्गतयोपासनविधानाच्च नियमेनोपासना उपादेया। न च वीर्यवत्तरत्वरूप- ा, 'तन्निर्धारणानियमः —' इत्यत्रोक्तत्वात् कथं तस्योद्गीथाङ्गत्वमिति - 'उद्गीथमुपासीत' इति वाक्येन उपासनस्योद्गीथरूपाश्रयसंबन्धे वीर्य- फलसंबन्धे च बोध्यमाने वाक्यभेदप्रसङ्गात्। न च वाक्यभेदभीत्या तस्य वासंभवेऽपि तस्य फलाकाङ्क्षायां रात्रिसत्रन्यायेन वीर्यवत्तरत्वस्यैवाऽऽर्थवादि- त्वकल्पनं संभवतीति वाच्यम् — पर्णतादावपि तथा प्रसङ्गात्। 'समाहा- 'होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरति' इति उपासनस्य समाहारनि- ते। उद्गातृकृतवेदनहानिप्रयुक्तोद्गीथवैगुण्यस्य होतृकर्तृकप्रणवोद्गीथैकत्व-

---

तुमर्हतीति होतृकर्तृकवेदनं तत्स्थाने उपदिश्यते। एवञ्च **इति होतृषदनादित्यत्र इति-** ब्दस्य हेतुत्वपरोऽपि स्यात्। ननु, 'वेदनहानौ अन्येन समाधानं ब्रुवत्' इति समाहार- वेदनहानौ वेदनादन्येन समाधानभाषणात् होतृशंसनपरमेव **सदनपदमिति** चेन्न— ैव वेदनफलपुत्रादिहेतुत्वे शंसनस्य नियताङ्गतया वेदनस्याननुष्ठानापत्तेः। अतः द्गीथाश्रितप्रकृतवेदनाभावे **अन्येन** होतृकर्तृकप्रणवाश्रितवेदनेनेत्येव तदर्थः। अस्तु तृषदनादित्यत्र **इतिशब्दस्य** हेतुपरत्वे **होतृषदनात्** होतृस्थानादिति। एवञ्च ग्रस्य होतृस्थानादित्यर्थः। होतृकर्तृकवेदनादिति तु फलितार्थः संदर्भबलसिद्धः।

ठव्यमिति। कर्तुं योग्यमित्यर्थः। भावप्रकाशिकानुरोधात्। न तूभाभ्यामपि युगपद- । नापि होत्रा प्रथमं तत्करणं संकल्पनीयम्। उद्गीथे हि प्रकृतदृष्टौ स्वरसतः ः। औद्गात्रसमाख्यानुरोधाच्च। तेन यथासंकल्पमकरणे उद्गीथप्रणवैक्यरूपमौचित्यं स्तदधिकारोऽनुमन्यतेऽत्रेति। **अधिकारान्तरे**ति। विधिवाक्ये फलसंयोगेत्यर्थः।

विज्ञानेन समाधानोक्त्या उपासनस्याऽऽवश्यकत्वप्रतीतेरित्यर्थः । 'गुणसाधा श्च' । उपासनगुणस्य उपास्यस्य प्रणवस्य, 'तेनेयं त्रयी विद्या वर्तते ओमित्या ओमिति शंसति ओमित्युद्गायति' इति साधारण्यश्रुतेश्चोपासनावश्यकता प्रकृतपरामर्शिना तेनेतिशब्देन उपास्यस्य प्रणवस्यैव प्रतीतेः । अत उपास ऽस्तीति प्राप्ते —

उच्यते । 'न वा तत्सहभावाश्रुतेः' । न वा क्रतुषूपादाननियमः उ सनादेः । कुतः ? तत्सहभावाश्रुतेः उद्गीथाङ्गभावाश्रुतेरित्यर्थः । वीर्य रूपफलार्थतया गोदोहनतुल्यत्वेन क्रत्वर्थत्वाभावादिति भावः । न च पर्ण पुरुषार्थत्वप्रसङ्गः । पर्णतायाः जुहूसंबन्धेऽप्यव्यापाररूपतया फलनिष्पादक फलाकाङ्क्षाया एवाभावात् फलकल्पनाया अप्रसक्तेः । [1]अतः फलाकाङ्क्षासिध्य परागेण[2] व्यापाररूपतां संपादयितुं जुहूलिङ्गेन क्रतुमुपस्थाप्य तत्संबन्धबोध वा कल्प्यः; जुहूशब्दस्य [3]वा जुहूसंबन्धिक्रतुलक्षकत्वं कल्प्यम् । ततश्च क्र नैव नैराकाङ्क्ष्यात् रात्रिसत्रन्यायेनाऽऽर्थवादिकफलकल्पना न समुन्मिषति । इ सनायाः स्वयं व्यापाररूपायाः क्रतूपरागमन्तरेणैव फलाकाङ्क्षा संभवति । सत्य लाकाङ्क्षायां वाक्यशेषस्यैव फलसमर्पकतया परिणामसंभवे फलवत्कर्मान्तर वाक्यकल्पनाद्यनपेक्षणात् । तस्माद् वाक्यशेषश्रुताय तस्मैतस्मै फलायोद्गीथ विशिष्टोपासनविधिरित्येव युक्तम् । न च उपासनानामाश्रयतन्त्रत्वात् सति

1. अत इति क. कोशे । 2. क्रतूपकारेण. क. । 3. वाशब्दः लक्षण पादानन्तरं ख. कोशे ।

---

उपास्यस्य प्रणवस्य सोपासनप्रणवस्य ।

जुहूसंबन्धेऽपीति । जुहूसंबन्ध इव केवलजुहूसंबन्धेऽपीत्यर्थः । फलायोद्गी थविशिष्टेति । प्रथमतः फलाकांक्षायामार्थवादिकफलस्योद्देश्यत्वेनान्वये सिद्धे उ नोद्देश्यत्वम्, केवलमाश्रयत्वमेवेत्यर्थः । न चाश्रयत्वस्यापि कर्मत्वरूपत्वात् फलोद्गीथोभय वाक्यभेद एवेति वाच्यम्—उपासनस्य ज्ञानरूपतया विषयाकाङ्क्षायां, 'सविषयक विषयित्वं द्वितीयार्थः' इति न्यायेन उद्गीथस्य विषयत्वेनैवान्वयात् । तदुक्तं सार "आश्रयालम्बमाम्नात" इति । आलम्बो विषयभावः । एवञ्च सति, 'मनो ब्रह्मेत्युप आत्मानमुपासीत' इत्यादाविव उद्गीथस्योपासनाङ्गत्वे तु न भवति । उद्गीथस्य क्रत्व

ाणामुपासनानामप्यावश्यकत्वमिति वाच्यम्। इदमेव ह्युपासनाना[1]मप्याश्रयतन्त्र- यत् आश्रये सत्येव वृत्तिः, नान्यदाऽस्तीति; न तु यावदाश्रयसत्त्वं वृत्ति- । ततश्च कामोपबद्धत्वादुपासनानाम्, कामनानाञ्चानित्यत्वात् तदवबद्धानामप्यु- ानामनित्यत्वमेव । 'दर्शनाच्च'। 'एवंविद्ध वै ब्रह्मा यज्ञं यजमानं र्वत्विजोऽभिरक्षति' इति ब्रह्मणो वेदनेनैव सर्वेषां रक्षणं ब्रुवती श्रुतिरुद्गातॄ- ानां वेदनस्यानियमं दर्शयतीति स्थितम्।

केचित्तु — उद्गीथविद्यायाः क्रत्वर्थत्वाभावे, 'अन्यथात्वं शब्दादिति चेत्' ्रकरणे, 'उद्गीथविद्यायाः क्रत्वर्थत्वेन क्रतुसाद्गुण्यफलकत्वेऽप्यार्थवादिकमपि तदविरुद्धं ग्राह्यमिति देवताधिकरणे प्रतिपादितम्' इति भाष्यं विरुध्येत। पुरुषार्थाधिकरणे, 'यदेव विद्यया करोति' इति विद्यायास्तृतीयाश्रुत्या कर्मा- ्रतिपादनात् न विद्यातः पुरुषार्थ इति, 'तच्छ्रुतेः' इति सूत्रेण पूर्वपक्षे कृते, विद्याशब्दस्य प्रकृतोद्गीथविद्याविषयत्वेन उद्गीथविद्यामात्रस्य कर्माङ्गत्वेऽपि न ्द्यायाः कर्माङ्गत्वमस्तीत्येतदर्थप्रतिपादकयोः, 'असार्वत्रिकी' इति सूत्र तद्भा- विरोधश्च स्यात्। अतश्चास्त्येव क्रत्वर्थत्वम्। न च, 'तन्निर्धारणानियमः', ेषु यथाश्रयभावः' इत्यधिकरणद्वयविरोधः; तयोर्नियतक्रत्वर्थत्वप्रतिक्षेपमात्र-

1. अपिः क कोशे।

---

ास्य क्रतुफलेनैव प्राकरणिकेन फलवत्तया उपासनाङ्गत्वायोगात्। तथाचोद्गीथस्याश्रयत्वं ्तमिति न दोष। ततश्चोद्गीथः उपासनस्यालम्बनतयोपकारकमात्रम्; नाङ्गम्। ोहनेन पशुकामस्य प्रणयेत्' इत्यादौ तु गोदोहनस्य व्यापारानाविश्य फलकरणत्वायोगात् ं तदुपकारकम्; प्रणयनस्य च व्यापारस्य द्रव्यमन्तरा निष्पत्त्यभावात् तस्य गोदोहन- कारकमिति भेदः।

केचित्तु इति। अत्रास्वरसोऽभिमतः। नान्यथात्वाधिकरणभाष्यविरोधः। उद्गीथविद्यायाः ङ्गत्वस्योपर्येव वक्ष्यमाणतया तस्यांशस्य सिद्धावसिद्धावपि तदधिकरणरचना संभवतीति नार्थत्वात् तत्रत्यभाष्यस्य। तदुक्तं सारावलौ। नापि 'असार्वत्रिकी' इति सूत्रभाष्यविरोधः। वेद्याशब्दो न सर्वविद्यापरः, किंतूद्गीथविद्यापर इति नास्त्येवावसरः पूर्वपक्षस्येत्येताव- यते, नोद्गीथविद्याया अङ्गत्वमपि। 'अङ्गेषु—' इत्यधिकरणे च विद्ययेति तृतीया फल- ्रपरेति स्पष्टमभाषि। अतो न कर्माङ्गत्वम्। नापि मन्त्रार्थवादोक्तफलार्थत्वं क्रत्वर्थत्वञ्चात्र ्रदिष्टम्, तथासति प्रस्तरप्रहरणादे: यथा क्रतुरेव प्रयोजकः, न मन्त्रार्थवादफलम्,

१ — ६.

**इयमेवर्क्, अग्निस्साम, तदेतदेतस्यामृच्यध्यूढँ साम; तस्म ध्यूढँ साम गीयते; इयमेव सा, अग्निरमः, तत् साम ॥ १ ॥**

---

परत्वात्। न च क्रत्वर्थत्वेऽप्यार्थवादिकफलस्वीकारे पर्णताया अपि अपा श्रवणफलकत्वप्रसङ्ग इति शङ्क्यम्—प्रस्तरप्रहरणस्य क्रत्वर्थस्यापि सूक्तवाकमन्त्रः फलार्थत्ववत्, उपकोसलविद्याङ्गभूताया अग्निविद्यायाः, 'नास्यावरपुरुषाः क्ष इतिप्रतिपन्नब्रह्मविद्याऽविरोधितदुपयोगिफलार्थत्ववच्च क्रत्वर्थाया अपि पर्णताः वादप्रतिपन्नक्रत्वविरुद्धफलार्थत्वे न दोष इति भाष्यकाराशय इति वदन्ति। 'अन्यथात्वं शब्दात्' इत्यत्र भाष्यस्यान्वारुह्योक्ति[1]त्वात् क्रत्वर्थत्वं न भाष्य मतमिति वदन्ति ॥ प्रकृतमनुसरामः।

प्रकारान्तरेणोद्गीथोपासनं प्रस्तूयते—**इयमेव—साम**। ऋचि [इयं पृथिवीदृष्टिः, साम्नि अग्निदृष्टिश्च कर्तव्येत्यर्थः। **तद्—साम**। **तदेतत्** अ साम **एतस्यां** पृथिवीरूपायामृचि **अध्यूढम्** उपरिस्थितमित्यर्थः। अत ऋगारूढमेव साम गीयत इत्याह **तस्मात्—गीयते**। एवं ऋक्सामयोः पृ दृष्टिं विधाय सामनामावयवभूतयोः **साशब्द—अमशब्दयोः** पृथिव्यग्निदृष्टिः व्येत्याह — **इयमेव—अमः**। उक्तोऽर्थः। **तत् साम**। **तत्** तत एव संसृ (सृष्ट) ष्टपृथिव्यग्निरूप साशब्दामशब्दमेलनेन सामव्यवहारो लोके इत्यर्थः।

1. क्त. क.

---

तथेह वीर्यवत्तरत्वादिकमप्रयोजकम्; उद्गीथ एव प्रयोजक इति स्यात्। तथाचानियम भङ्गः स्यात्। व्यक्तमिदमस्मत्कृत **श्रीभाष्यविषयविमर्शमालायामित्यलमत्र**।

अथ षष्ठे सप्तमे च खण्डे क्रमात् उद्गीथाश्रिता अन्तरादित्यविद्या, अन्तरक्षि पृथक्फलार्था प्रस्तूयते। तत्रोभयत्र उपास्यस्य हिरण्मयपुरुषस्य ऋक्सामगेष्णत्वं वक्ष्यं ऋक्सामयोर्विशेषणभूताः काश्चिद् दृष्टय आदौ विधीयन्ते **इयमेवे**त्यादिना।

अन्तरिक्षमेवर्क्, वायुस्साम; तदेतदेतस्यामृच्यध्यूढँ साम;
च्यध्यूढँ साम गीयते; अन्तरिक्षमेव सा, वायुरमः, तत् साम ॥ २ ॥
द्यौरेवर्क्, आदित्यस्साम; तदेतदेतस्यामृच्यध्यूढँ साम; तस्मा-
ढूँ साम गीयते; द्यौरेव सा, आदित्योऽमः, तत् साम ॥ ३ ॥
नक्षत्राण्येवर्क्, चन्द्रमास्साम; तदेतदेतस्यामृच्यध्यूढँ साम;
च्यध्यूढँ साम गीयते; नक्षत्राण्येव सा, चन्द्रमा अमः, तत्
। ४ ॥
अथ यदेतदादित्यस्य शुक्लं भाः सैवर्क्, अथ यन्नीलं परःकृष्णम्
म; तदेतदेतस्यामृच्यध्यूढँ साम; तस्मादृच्यध्यूढँ साम गीयते;
देवैतदादित्यस्य शुक्लं भाः सैव सा, अथ यन्नीलं परःकृष्णम् तदमः,
म ॥ ५ ॥
अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हि-

---

अन्तरिक्ष—साम। (२, ३, ४)। पूर्ववदर्थः।

अथ—ऋक्। शुक्लं भाः शुक्ला दीप्तिरित्यर्थः। शुक्लमिति लिङ्गव्यत्य-
इसः। अथ—साम। परःकृष्णम् अतिशयेन कार्ष्ण्यरूपम्। परःकृष्ण-
सिद्धं यत् नीलम्, तत् सामेत्यर्थः। आदित्ये कार्ष्ण्यस्य समाहितदृष्टिभि-
णत्वात् तदस्तीति द्रष्टव्यम्। अत्र परशब्दः सान्तो द्रष्टव्यः। तत् —
। स्पष्टार्थम्।

एवमृचि पृथिव्यन्तरिक्षद्युनक्षत्र — आदित्यगतशुक्लभारूपत्वदृष्टिम्, साम्नि
ध्वादित्यचन्द्र — आदित्यगतनीलभारूपत्वदृष्टिञ्च विधायाऽऽह — अथ —
। अन्तरादित्ये आदित्यमण्डलस्यान्तः हिरण्मयो रमणीयो [ यो ] योगि-
त इत्यर्थः। 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' इति श्रुत्यै-

---

य एष इति। परविद्यानिष्ठैर्दृश्यमानतया प्रसिद्धः परमात्मैव संप्रति दृष्ट्यर्थं गृह्यत
धिः।

आदित्यमण्डलस्यान्तरिति। नन्वयं परमात्मा हिरण्मयपुरुषः किमादित्यमण्डलान्त-
उत तदन्तर्वर्तिरविशरीरान्तर्वर्ती? नाद्यः, 'य एष एतस्मिन् मण्डले पुरुषः' इति

कार्थ्यात् । "**हिरण्मय** इति रूपसामान्यात्, चन्द्रमुखवत्" इति [हि] **कारः** । ततश्च **हिरण्मय**शब्दस्य न मुख्यार्थो ग्राह्य इति वाक्यकाराभिप्रायः हिरण्मयत्वमुज्ज्वलत्वमित्यर्थः । ततश्च नीलतोयदाभस्यापि हिरण्मयत्वे नानुप यद्वा, "कच्चिन्न तत् हेमसमानवर्णं तस्याननम्" इति श्रीरामायणप्रयोगात्, ' रुक्मवर्णम्'इति श्रुतेश्च नीलतोयदाभस्यापि रुक्मवर्णत्वं संभवति । तत्र संप्रदायगम्यः । एतत् सर्वं **वेदार्थसंग्रह**श्रुतप्रकाशिकायां स्पष्टं तत एवावगन्त

---

बृहदारण्यके श्रवणेऽपि, श्रीविष्णुपुराणे (२-११.), 'ऋग्यजुस्सामभूतोऽन्तः स तिष्ठति,' 'आत्मसप्तगणस्थं तं भास्वन्तमधितिष्ठति' इति मण्डलान्तवर्तिसप्तगणमध्ये सा रैव स्थितेर्विशिष्योक्तत्वात् । नान्वय, तथासति **अन्तरादित्ये** इत्यस्य आदित्यपुरु रित्येव व्याख्यानसंभवात् शिरोवेष्टनायोगात्—उच्यते । मण्डलान्तर्वर्तित्वेऽपि तत्पुराणो द्वादशस्वादित्येषु मध्ये एकैकस्मिन् मासि एकैकस्यान्तःस्थितेरिष्टत्वेन, मण्डलाद्बहिस्त वृत्त्या च अव्यवस्थितादित्यतच्छरीराणामुपास्यकोटिनिवेशमकृत्वा प्रणाल्या मण्डलान्तर्वर्ति उपास्य इति ज्ञापनार्थं **मण्डलस्यान्त**रिति व्याख्यानम् । अत एव श्रुतिस्मृतिश्रीभा० मण्डलग्रहणम् । तथाच सिद्धान्तनिगमनेऽपि श्रीभाष्यम् – , 'अत आदित्यमण्डलाक्ष्य आदित्यादिजीवव्यतिरिक्तः परमात्मैव' इति । न खलु गृहान्तवर्तिपेटिकाधिष्ठाय गृहान्तर्वर्तित्वमनुपपन्नम् । तथेह भाव्यम् । गीताभाष्येऽपि, ज्योतिषां रविरंशुमान्' **रविरादित्यगण** इति भाषितम् । तेष्वादित्येषु विष्णुः साक्षात्परमात्मा साक्षा मण्डलान्तर्वर्त्यपि । तथाच, 'रामः शस्त्रभृतामहम्' इत्यत्र **तात्पर्यचन्द्रिका,** 'आ र्गतो विष्णुस्तु रामतुल्यः' इति । वस्तुतस्तु तत्रैव, 'स्तम्भस्थदर्पणस्यैति योय नरः । छायाऽऽदर्शनसंयोगं सस प्राप्नोत्यथात्मनः (२-११-१९) एवं सा वैष्णवी शक्ति आदित्यमण्डले आविर्भूय स्थित एव परमात्मा रविशरीरे प्रतिसंगतः पितृदेवमनुष्य पेक्षितनिर्वाहक इति निरूपणात् मण्डलान्तर्वर्तित्वमेव संप्रतिपत्तव्यम् ।

**वाक्यकारः** ब्रह्मनन्दी । **वाक्यम्** एतदुपनिषद्व्याख्या । **मुख्यार्थः** हिर० त्वम् । **हिरण्मयत्वे** हिरण्मयशब्दवाच्यत्वे । 'द्राविडभाष्ये' त्यादिना हिरण्मयशब्द तितः । **यद्वेति** । अत्र पक्षेऽपि वाक्यं सुयोजम्—हिरण्मय इति प्रयोगः न हिरण्यलो त्वात्, किंतु **रूपसामान्यात्** तद्वर्णसमानवर्णत्वात् तत्सदृशरूपार्थे तत्पदप्रयोगश्च न शब्दे दृष्ट इति । हिरण्यशब्दो रूपसामान्यात् परवासुदेवविग्रहपरः । तद्विकारत्वरूपं यत्वञ्चादित्यान्तर्वर्तिपुरुषे इति वाऽस्तु । **रुक्मवर्णत्वं संभवति** इति । अत्र, कण्ठच्छवि शुद्धहेम' इति प्रकृतविषये **तात्पर्यचन्द्रिका**-(४·६·) गृहीतं शिल्पशास्त्र 'नित्यश्रीर्भ्रविम्बे श्रुतः' इति **सारावल्यादि** चानुसंधेयम् । **वेदार्थेति** । वेदार्थसं मुखात् यत् श्रुतम् तस्य प्रकाशिकायां तात्पर्यदीपिकाख्यतद्व्याख्यायामित्यर्थः ।

। केचित्—'कप्यासं पुण्डरीकमिति वाक्ये कप्यासशब्देनाऽऽदित्य-
ो । पुण्डरीकमित्यनेन हृदयपुण्डरीकमुच्यते । अतश्च यथा सूर्यमण्डलं
कश्चोपासनस्थानम् , एवमुपासकस्याक्षिणी अपि परमात्मन उपासनस्थानम्'
याख्यानदूषणावसरे व्यासार्यैः, 'आदित्यमण्डलरूपस्थानावरुद्धे अ-
[या विधानं न संभवति' इत्युक्तेः आदित्यमण्डलस्थानमुत्पत्तिशिष्टमिति
तश्च य एषोन्तरादित्य इति वाक्यमुपासनोत्पत्तिपरम । ततश्च पुरुषो
त्यत्र 'द्रष्टव्यः' इत्यर्थ इति व्यासार्याभिप्रायः । न च आदित्य-
त्तिशिष्टत्वे उत्पत्तिशिष्टस्थानावरुद्धे भाष्यकृदभिमतपुण्डरीकदलामलायता-
र्थ विधानमिति वाच्यम् — पुण्डरीकाक्षत्वादेरुत्पत्तिशिष्टादित्यमण्डलस्था-
[ उत्पत्तिशिष्टाविरुद्धगुणानां विधानसंभवात् । नन्वेवं, 'सर्वत्र प्रसि-
' इत्यत्र, 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इत्युत्पत्ति-
ावरुद्धे मनोमयत्वादीनां विधानं न संभवती' त्याक्षिप्य, 'सर्वं खलु'
। उपासीतेत्यनेन एकवाक्यत्वाभावेन सार्वात्म्यस्य नोत्पत्तिशिष्टत्वम्' इति
समर्थनमयुक्तं स्यात् । 'मनोमयत्वादीनामुत्पत्तिशिष्टसार्वात्म्याविरोधात्'
ासंभवेन वाक्यभेदमाश्रित्य सार्वात्म्यस्योत्पत्तिशिष्टत्वाभावसमर्थनं मुधा
- उपायान्तरस्योपायान्तरादूषकत्वात् — इति वदन्ति ।

ये तु—'आदित्यमण्डलस्थानावरुद्धे' इति नोत्पत्तिशिष्टस्थानावरुद्ध-
] मभिप्रेतम् । अपितु युगपदनुपसंहरणीयादित्यमण्डलरूपाक्षिरूपस्थान-
अष्टदोषदुष्टविकल्पप्रसङ्गात् इत्येव तात्पर्यम् — [2]इत्याहुः ।

दा पश्यः पश्यते रुक्मवर्णम्' इति प्रकरणे, 'मनसा तु विशुद्धेन'
गविग्रहविशिष्टस्य विशुद्धमनोग्राह्यतोक्तेः, आरोपिताकारस्य विशुद्धमनो-
त , अनारोपितत्वं सिद्धम् । 'ईक्षतिकर्मव्यपदेशात् सः' इत्यत्र ईक्ष-
म (र्थ?) विषयत्वं वक्तव्यम्' इति परैरप्यङ्गीकृतत्वाच्च । 'आदित्य-
परस्तात्' इति तमःपारवर्तिन आदित्यवर्णविग्रहविशिष्टत्वाभिधानेन
सक्तेः । न हि कल्पितस्य तमःपारवर्तित्वं संभवति ।

त्यस्य ख. 2. इत्यन्ये क. तत्र पूर्वं अन्ये तु इति नास्ति ।

रण्यकेश आ प्रणखात् सर्व एव सुवर्णः ॥ ६ ॥ तस्य यथा पुण्डरीकम्, एवमक्षिणी ;

हिरण्यश्मश्रुर्हिरण्यकेशः रमणीयश्मश्रुकेशः, आ प्रणखात् र सुवर्णः रमणीयसर्वावयव इत्यर्थः । तस्य—अक्षिणी । कं पिबतीति क दित्यः । तेन अस्यते क्षिप्यते, विकास्यत इति कप्यासम् । तथाऽऽह कारः, "आदित्यक्षिप्तं वा श्रीमत्त्वात्" इति । यद्वा कं पिबतीति क लम् । तस्मिन् आस्त इति कप्यासम् । अपचितादपि पङ्कजात् नालस्थस्य कस्य शोभातिशयशालित्वात् तादृशमिह विवक्षितम् । यद्वा कं जलम् । आस शन इति धातुः अपिपूर्वकः । 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इति अकारलोपः । के जलेऽप्यास्त इति कप्यासं सलिलस्थमित्यर्थः । एवमस्यार्थ पपन्नतया वाक्यकारेण सिद्धान्तितत्वमभिप्रेत्य भगवता भाष्यकारेण वेदार्थ 'गम्भीराम्भस्समुद्भूत-सुमृष्टनाल-रविकरविकसित-पुण्डरीकदलामलायतेक्षण' हितम् । मर्कटजघनसदृशपुण्डरीकसादृश्यादि अर्थान्तरं तु अश्लीलत्वादिदोष वाक्यकृदनादृतत्वाद् भाष्यकारेणाप्यनादृतम् ।

यद्यपि अमरकोशे 'पुण्डरीकं सिताम्भोजम्' इत्यनुशिष्टम् — शबरस्वामिना नवमाध्याये, 'मौद्गं चरुं निर्वपेच्छ्रियै श्रीकामः' इति विहितायामि ण्डरीकाणि बर्हींषि भवन्ति' इति स्तरणार्थत्वेन विहितेषु पुण्डरीकेष्वतिदेश 'दर्भैः स्तृणीत हरितैः' इति मन्त्रस्य दर्भपदस्थाने पुण्डरीकपदं हरित

प्रणखात् नखाग्रात् । क्षिप्तं वेति । वाशब्दः पूर्वोक्तार्थव्यावृत्त्यर्थः । अत्र पूर्वपक्ष तावत्—कपिः मर्कटः । आसं जघनम् । कप्यासपदं कपिजघनसदृशरूपार्थे लाक्षणि कप्यासम् ईषद्विकसितमिति, कप्यासं सूर्यमण्डलम्—यथा सूर्यमण्डलं हृदयपुण्ड पासनस्थानम्, तथा अक्षिणी अपि उपासनस्थानमित्येवम् । अत्र ईषद्विकसितमित्यर्थः त योगव्युत्पत्त्यलाभात् नेष्टः । तृतीयोऽर्थः कप्यासपुण्डरीकपदयोः प्रतीतसामानाधिकरण्य नेकदोषदूषितः । सर्वमिदं श्रीभाष्यकारैः शिष्येभ्य उपदिष्टं गाम्भीर्यात्, 'गम्भ इत्यादिस्वसूक्त्यैव ध्वनितम् । विस्तरोऽन्तरधिकरणटीकादौ ।

पौण्डरीकाणीति । पुण्डरीकमेव पौण्डरीकम्; यद्वा पुण्डरीकदलम् । बर्हिः स्तरणार्थानि पुण्डरीकसाध्यानि भवन्तीति च श्रुत्यर्थमाहुः । पुण्डरीकपदमिति । दर्भ

**तस्योदिति नाम; स एष सर्वेभ्यः पाप्मभ्य उदितः;**

हितव्यम् — इत्युक्तत्वात् रक्ताम्भोजमेव पुण्डरीकमिति द्रष्टव्यम् ।

**तस्य उत् इति नाम** । स्पष्टोऽर्थः । तस्योन्नामकत्वे हेतुमाह — **स** **भ्यः पाप्मभ्य उदितः** । सर्वपापोद्गतत्वात् उन्नामक [त्वम्] इत्यर्थः । शकुन्तस्योद्गमनवत् पापपञ्जरादुद्गमनरूपमुख्यार्थस्य कुत्राप्यभावात् उद्गमनेन ाहित्यं लक्ष्यते । 'नैनं सेतुमहोरात्रे तरतः, न जरा न मृत्युः न शोको न दुष्कृतम्' इति परमात्मनः सुकृत[1]दुष्कृत संबन्धाभावो हि प्रतिपाद्यते। ासिवाचित्वात् । पापशब्दश्च पुण्यपापरूपोभयविधकर्मपरः । परमात्मप्रकर-

[1] दुष्कृत पदं ख. कोशे न ।

वाचकपदोहमात्रस्य शबरस्वाम्युक्तत्वात्, पद्मपदमेवोहितव्यं खण्डदेव आह । पुण्ड- नेव पार्थसारथिमिश्रः । अत्रेदं बोध्यम्—कल्हारहल्लकयोः रक्तत्वभेद इव अम्भोजेऽपि ं पूर्णसितत्वमिति भेदोऽस्ति । पुण्डरीकपदस्य सितत्वविशिष्टपद्मवाचित्वेऽपि तावता ावृत्तिमात्रं चिकीर्षितम् । न तु सामान्यपद्मव्यावृत्तिरपि । अमरकोशेऽपि अथशब्दा- न्य, 'पुण्डरीकं सिताम्भोजम्' इत्युक्तिरेवमभिप्रायाऽपि स्यात् । पद्मादिपदार्थाघटकं ुण्डरीकपदशक्यकोटिप्रविष्टमित्येतावदेव कोशात् सिध्येत् । अतः श्रुति प्राचीनप्रयोगा- कोशार्थो निर्धार्यः । पुण्डरीकपदञ्च शुद्धधवले ईषत्सिते च यथायथं ग्राह्यम् । तत्र पद्मसामान्ये श्रुतौ पुण्डरीकपदप्रयोगात् शुद्धसितरूपविशेषपर्यवसाने मानाभावात् देन जातिवाचिना सितत्वांशस्याप्युक्तावपि, तद्भतरक्तत्वांशस्यानुक्तस्य कथनार्थं रक्तपद- ततीहाभिमतं स्यादिति । (अत एव पर्यन्तरक्ते सिते त्वाचरोगविशेषे पुण्डरीकपदं वाच- र्शितमित्यन्यदेतत् ।) पर्यन्तरक्तत्वं अंशे सितत्वं मध्ये समुन्नतत्वममलत्वायतत्वादि कदलसाम्यमक्षणः ।

दितः उत् ऊर्ध्वं इतः गत । उत्क्रान्तः । **उदेति** उत्क्रामति । **कुत्रापीति** । परमात्मनि उद्गमनं यथा न संभावितम्, तथा अणौ जीवेऽप्यसंभावितमेव, पाप्मनाम- ते भावः । संबन्धराहित्यञ्चेदं न संबन्धध्वंसरूपम्, श्रुत्यन्तरविरोधात् । अतः परमात्म- त्यन्ताभावरूपम् इत्याह **नैनमिति** । कर्मसामान्यात्यन्ताभावरूपं फलितार्थं दर्शयितुं विवक्षितमाह **पापशब्दश्चेति** । तत्र श्रुतिस्मृतियुक्तीः क्रमेण दर्शयति **परमात्मेति** ।

**उदेति ह वै सर्वेभ्यः पाप्मभ्यः, य एवं वेद ॥ ७ ॥ तस्य ऋक् च गेष्णौ; तस्मादुद्गीथः; तस्मात्त्वेवोद्गाता, एतस्य हि गाता ॥**

---

णेषु, 'नैनं सेतुं — — न सुकृतं—पाप्मानोऽतो निवर्तन्ते' इति ; पापशब्दप्रयोगात्, 'पाप्मानः कालजरामृत्युशोकादयः संख्यातत्वात्' **व्यकारवचनात्**, अलौकिकत्वे सति अनिष्टफलसाधनत्वरूपप्रवृत्तिनिमि पुण्यस्यापि पापशब्दाभिधेयत्वोपपत्तेः । मुमुक्ष्वपेक्षया स्वर्गादीनामप्यनिष्टत्वा

'एते वै निरयास्तात स्थानस्य परमात्मनः ।'

'क नाकपृष्ठगमनं पुनरावृत्तिलक्षणम् ।
क जपो 'वासुदेवे' ति मुक्तिबीजमनुत्तमम् ॥'

इति स्मरणात् । सर्वपापोदितत्वं नाम कर्मवश्यतागन्धराहित्यमिति ऽर्थः । कृतानामपि कर्मणां फलजननशक्तिप्रतिभट[1]त्वलक्षणः कश्चिदैश्वरस्व शेषोऽपहतपाप्मत्वाख्यः सर्वपापोदितशब्दार्थ इति द्रष्टव्यम । एवं नाम[2]विशि फलमाह — **उदेति — वेद** । स्पष्टोऽर्थः ।

**तस्यर्क् च साम च गेष्णौ** । पृथिव्यग्न्यादि[3]दृष्टिविशिष्टतया प्राक् ऋक्सामे एतस्य **गेष्णौ** गानरूपे । यद्यपि ऋचो गानाश्रयत्वेऽपि न ग त्वम् — तथाप्यभेदोपचारेण गेष्णत्वोक्तिर्द्रष्टव्या । अव्युत्पन्नो **गेष्णशब्दः** त्ययेन पुंस्त्वम् । अग्नीन्द्रादिप्रतिपादकर्क्सामगेयत्वोक्त्या सर्वात्मकत्वमुक्तं **तस्मादुद्गीथः — गाता** । यस्मादुन्नामकत्वं परमात्मनः, अत एव तद्ग त्वात् द्वितीयभक्तेः **उद्गीथसंज्ञत्वम्**, तद्गातुरुद्गातृसंज्ञाकत्व (वत्त्व) श्चे

1. प्रतिभटलक्षणः क. 2. एवं नामशिष्ट ख. एवं नाम शिष्ट ग. ३. पृथि दित्य. ख. ग.

---

अन्तरादित्यविद्याफलस्योपरि वक्ष्यमाणत्वात् मध्ये, 'उदेति ह वै सर्वेभ्यः' इति फला धानं उपासकापहतिकरणौपाधिकं यत् निरुपाधिकं स्वतस्सिद्धं नित्यमुक्तव्यावृत्तं पाप्मोदि तस्य स्वभावविशेषस्य पापप्रतिभटत्वरूपस्यात्र विवक्षेति ज्ञापनार्थमित्याशयेनाऽऽह **कृत** पीति । न हि नित्यादिनिष्ठिद्धधर्मवेदनात् कश्चित् पाप्मभ्य उदेति ।

स एष ये चामुष्मात् पराञ्चो लोकाः तेषाञ्च ईष्टे देवकामानाञ्च
इत्यधिदैवतम् ॥ ८ ॥

इति प्रथमाध्याये षष्ठः खण्डः

---

१—७.

अथाध्यात्मम् — वागेवर्क्, प्राणस्साम; तदेतदेतस्यामृच्यध्यूढँ तस्मादृच्यध्यूढँ साम गीयते; वागेव सा, प्राणोऽमः, तत् १ ॥

---

ात्मन उन्नामकत्वात् ऋक्सामगेष्णत्वाच्च उद्गेष्णस्य (?) परमात्मनः उद्गीथ-
ते । तत उद्गीथे परमात्मदृष्टिर्युक्तेत्यर्थः ।

स — कामानाञ्च । स एषः हिरण्मयः पुरुषः आदित्यमण्डलोर्ध्वे-
नां देवभोग्यभोगोपकरणभोगस्थानानाञ्च नियन्तेत्यर्थः । इत्यधिदैवतम् ।
म्] उपदिष्टमिति शेषः ।

अथाध्यात्मम् । उपदिश्यत इति शेषः ।

---

द्गेति । अत्र कल्पे उद्गीथे परमात्मदृष्टिः । पूर्वकल्पे तु कर्माङ्गोद्गीथगानकाले पूर्वोक्त-
न्तनपूर्वकं ऋक्सामयोस्तद्गेष्णतया उद्गीथे उन्नामकपरमात्मगानरूपत्वचिन्तनमात्रमिति
दृष्टिपक्षः शाङ्करदर्शितः । "परोवरीयस्त्वादिवत्' इत्यत्र श्रीभाष्यटीकयोरप्येवम् ।
क्षं 'सोऽमुनै'ति वाक्यार्थवर्णनात् प्रागपि दर्शयिष्यति । तथाच तस्मादुद्गीथ
स्मात् परमात्मा उद्गीथः, उन्नामकत्वात् गीयमानत्वाच्चेत्यर्थः । एवञ्चोद्गीथशब्दप्रति-
द्गीथ इव परमात्मन्यपि सत्त्वात् उद्गीथे परमात्मदृष्टिर्युज्यत इति सिध्यति । उद्गे-
परमात्मन इत्यत्र पाठो निरीक्ष्यः; परमात्मनो गेष्णत्वस्य गानरूपत्वस्याभावात् ।
ष्णकत्वस्यैव शाङ्करेऽप्युक्तेः । यद्वा गेष्णशब्दस्याव्युत्पन्नत्वात् गानमात्रपरत्वे अनिर्भ-
पीत्यनेन पूर्वं सूचितत्वात् गानतया साम्नो गेष्णत्वस्य, गानसाधनतया ऋचोऽपि
व गेयतया परमात्मनोऽपि गेष्णत्वं भवितुमर्हति । तथाचोद्गीथस्य उद्गानत्वात् उन्नाम-
गानत्वाच्चोद्गेष्णत्वम्, परमात्मनः उत्त्वे सति गेष्णत्वादुद्गेष्णत्वम् । एवमुद्गेष्णत्वादु-
ति । 'वाक् गीथा' इति बृहदारण्यकात् ऋक्सामरूपवाग्विषयतया गीथात्वात्
परमात्मनः ।

चक्षुरेवर्क्, आत्मा साम, तदेतदेतस्यामृच्यध्यूढँ साम; ६
च्यध्यूढँ साम गीयते; चक्षुरेव सा, आत्माऽमः, तत् साम ॥ २

श्रोत्रमेवर्क्, मनस्साम; तदेतदेतस्यामृच्यध्यूढँ साम; ६
च्यध्यूढँ साम गीयते; श्रोत्रमेव सा, मनोऽमः, तत् साम॥ ३ ।

अथ यदेतदक्ष्णः शुक्लं भाः सैवर्क्, अथ यन्नीलं परःकृष्ण साम; तदेतदेतस्यामृच्यध्यूढँ साम; तस्मादृच्यध्यूढँ साम गीयते; यदेवैतदक्ष्णः शुक्लं भाः सैव सा, अथ यन्नीलं परःकृष्णम् तदमः साम ॥ ४ ॥

अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते, सैवर्क्; तत् साम; क्थम्; तद् यजुः; तद् ब्रह्म ।

तस्यैतस्य तदेव रूपम्, यदमुष्य रूपम्; यावमुष्य गेष्णौ गेष्णौ; यन्नाम, तन्नाम॥ ५ ॥

स एष ये चैतस्मादर्वाञ्चो लोकाः तेषाञ्च ईष्टे, मनुष्यकामाना

---

वागेवर्क् — तत् साम । (१, २, ३, ४.)। सर्वं पूर्ववत् ।

एवमृचि वाक्चक्षुःश्रोत्र – अक्षिगतशुक्लभारूपत्वदृष्टिम्, साम्नि च्छायात्म मनो – ऽक्षिगतपरःकृष्णरूपत्वदृष्टिञ्च विधायाह – **अथ यः** – चक्षुषि: यः पुरुषो योगिभिर्दृश्यते, स एव ऋग्यजुस्सामात्मा, उक्थादिश ब्रह्म चेत्यर्थः । अलोक्थस्य लय्यपेक्षया पृथक्परिगणनं गोबलीवर्दन्यायेन द्रष्ट तस्य — **नाम** । **तस्यैतस्य** अक्ष्यन्तर्वर्तिनः परमपुरुषस्य, आदित्यान्तर्वर्ति हिरण्मयत्वादिरूपम्, उदिति नाम, ऋक्सामरूपगेष्णौ च, तानि सर्वाणि भवन्ती

**स एष — कामानाञ्चेति** । **एतस्मात्** अक्षिस्थानात् अधोवर्तिनां नां मनुष्यभोग्यादीनाञ्च एष नियन्तेत्यर्थः ।

---

**चक्षुरेवर्क् आत्मा साम** । अत्र आत्मशब्दः चक्षुर्निष्ठच्छायात्मपर इति ६ नावतरणवाक्याद् ज्ञायते । **सैवर्गित्यादि** । अक्षिविद्यायां ऋगाद्यात्मत्वमधिक उपदि **तदेव** रूपमित्यादित्रयमतिदिष्टकारः ।

तद् य इमे वीणायां गायन्ति, एतं ते गायन्ति; तस्मात्ते धन-
। ६ ॥ अथ य एतदेवं विद्वान् साम गायति, उभौ स गायति ॥

सोऽमुनैव, स एष ये चामुष्मात् पराञ्चो लोकाः, ताँश्चाप्नोति
ाँश्च ॥ ७ ॥ अथानेनैव, ये चैतस्मादर्वाञ्चो लोकाः, ताँश्चाप्नोति
ामाँश्च ॥

तत् — गायन्ति । यस्मादयमीश्वरः, तस्मात् हेतोः वीणागायकाः
इममेव गायन्तीत्यर्थः । तस्य सर्वात्मकत्वेन देवमनुष्यादिकर्मकगानस्यापि
ाषयत्वादिति भावः । तस्मात्ते धनसनयः । सनिः लाभः । धनानां स-
ो धनसनयः । ईश्वरगायकत्वादेव वीणागायकानां धनलाभवत्त्वम् । न
ातृत्वे धनप्रसक्तिरस्तीति भावः । अथ य — गायति । अध्यात्माधि-
ाविद्यायुक्तः सन् उद्गीथं यो गायति, स चाक्षुषमादित्यस्थञ्च गायतीत्यर्थः ।
चाक्षुषेण परमात्मना आदित्यान्तर्वर्तिना च परमात्मना ऐक्याध्यास-
॥ तादृशोद्गीथगायकस्यैव परमात्मगायकत्वादिति भावः ।

तस्यैवं विदः फलमुच्यते — सोऽमुनैव —[1] मनुष्यकामांश्च । सः
अमुनैव आदित्यान्तर्वर्तिना उपासितेन स एषः तदुपासनाविशिष्ट एष[2]
कान् देवकामांश्चाप्नोति[3]; अनेनाक्ष्यन्तर्वर्तिना उपासितेन मनुष्यलोकाद-
कान् मनुष्यकामांश्चाप्नोति[5] । चक्षुरादित्यस्थानवर्तिपरमात्मोपासनया सर्व-
ुर्भवतीत्यर्थः ।

ख. कोशे देवकामांश्चेत्यन्ते पृथक्, तदुपरि च पृथक् पृथक् धृत्वा व्याख्या निवेशिता ।
। एतस्माद्, ख. 3. आप्नोतीत्यर्थः, ख. 4. लोकादिति पृथक्पाठो ग. कोशे ।
ोकाश्च स्तने ' ति समस्तम् । 5. आप्नोतीत्यर्थः ख.

ामानाश्चेति इति इतिशब्देन अध्यात्मविषयसमाप्तिज्ञापनाच्च तद् य इमे इत्यादि
शेषभूतम् । लौकिकेऽपि गाने गायकानामज्ञत्वेऽपि सर्वकर्मसमाराध्यः स एव सर्वत्र
यः फलप्रदश्च । एवं विदित्वा सामगाने कृते गानाराध्यत्वं तस्य तत्तदुपासनेऽनुसंहि
वेशिष्टार्थः । उभौ स गायतीति । तस्य वा अस्य वा उभयस्य गानेऽपि एवं विद्वान्
: । अथ फलवाक्ये स इति पदयोः पदं प्रथमं गानाराध्यत्वविदित्यर्थकम् । द्वितीयं
ाविशिष्टार्थकम् ।

**तस्मादु हैवंविदुद्गाता ब्रूयात् ॥ ८ ॥ 'कं ते काममागाया एष ह्येव कामागानस्येष्टे, य एत[1]देवं विद्वान् साम गायति, साम गा**

इति प्रथमाध्याये सप्तमः खण्डः

---

1. य एवं. शा. मा.

---

**तस्मादु—आगायानीति। एवंवित्** एतादृशविद्यायुक्त उद्गाता प्रति[1]–, 'हे यजमान! ते कं देवकामं मनुष्यकामं वा **आगायानि** गानेन यानीति–ब्रूयादित्यर्थः। नन्वेतादृशोक्तौ उद्गातुः कथं सामर्थ्यमित्यत्राह–**एष**– एवंविदुषः **साम**गस्य कामसंपादकगानसामर्थ्यमस्तीत्यर्थः। द्विरुक्तिर्विद्यासमाप

**एत**त्खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते —

समन्वयाध्याये प्रथमपादे — अन्तरादित्ये अन्तरक्षिणि च वर्ती श्रुतः पुरुषो जीव एव। 'हिरण्यश्मश्रुर्हिरण्यकेश आ प्रणखात् सर्व एव सु इति शरीरसंबन्धश्रवणात्। शरीरत्वस्यैव कर्मजन्यतावच्छेदकत्वेन कर्माजन्य संभवात् प्रक्रमश्रुतेन शरीरित्वलिङ्गेन जीवत्वे निश्चिते औपसंहारिकं सर्वपापो मापेक्षिकं नेतव्यमिति पूर्वपक्षे प्राप्ते —

उच्यते। 'अन्तस्तद्धर्मोपदेशात्'। आदित्याक्ष्यन्तर्वर्ती पुरुषः पर परमात्मधर्मोपदेशात्। कर्मवश्यतागन्धराहित्यलक्षणं नित्याविर्भूतं सर्वपापोदि परमात्मनोऽन्यत्र संभवति। तच्च चरमश्रुतमपि, 'उदेति ह वै सर्वेभ्यः पाप्म एवं वेद' इति फलरूपतात्पर्यलिङ्गात् प्रबलम्। तथा ऋक्सामगेयत्वाक्षिप्तं, तत्साम' इति वाक्यश्रुतञ्च सार्वात्म्यं परमात्मधर्मः। तथा अक्ष्यादित्यवर्त्येक तोर्ध्वाधोवर्तिलोककामेश्वरत्वरूपं निरङ्कुशं सर्वकामेश्वरत्वमपि, 'सोऽमुनैव ये चामुष्मात् पराञ्चो लोकास्तांश्चाप्नोति देवकामांश्च, अथानेनैव ये चैतस्मा लोकास्तांश्चाप्नोति मनुष्यकामांश्च' इति वाक्यशेषप्रतिपन्नफलरूपतात्पर्यलिङ्गा तत्वात् प्रबलम्।

1. प्रतिब्रूयात्। किमितीत्यत्राह कं ते—इति ख. कोशे। 2. प्रब्रूयादित्य

---

पूर्वाख्याऽऽपतितं, वेदनं फलस्याभिगतमिति भ्रमं व्यावर्तयति तस्मादिति।

तः प्रबलैः परमात्मलिङ्गैः परमात्मत्वे निर्णीते,

'अजायमनो बहुधा विजायते',

'अजोऽपि सन् अव्ययात्मा भूतानामीश्वरोऽपि सन्।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया॥'

'[परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय] संभवामि युगे युगे॥'

'इच्छागृहीताभिमतोरुदेहः'

ास्मृत्यनुसारेण अजहत्स्वस्वभावस्यैव परमात्मनो मायाशब्दितसंकल्प-
ाकपरित्राणायाप्राकृतदिव्यविग्रहपरिग्रहोपपत्तेः—

— एतेन नित्यसर्वज्ञस्य सर्वशक्तेर्ज्ञानार्थं प्रवृत्त्यर्थं वा करणानपेक्षणात्
तृप्तस्य विग्रहे स्पृहाऽसंभवाच्च विग्रहो न संभवतीति शङ्का प्रत्युक्ता।
ाज्ञानक्रियस्यापि परमात्मन उपासकानुग्रहार्थं भोगार्थश्च विग्रहस्वी-
। प्रभूतानन्दानामप्यानन्दान्तरापेक्षादर्शनेन निरतिशयानन्दस्वरूपस्यापि
तिविशेषापेक्षायाः संभवात्। न च विग्रहस्य भोग्यत्वे स्वरूपभोग्यत्ववैकल्यं
—स्वसंबन्धिभोग्यत्वस्य स्वभोग्यत्वातिशयावहत्वेन तद्वैकल्यावहत्वाभावात्।

'समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः।
तद् विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत्॥
समस्तशक्ति रूपाणि तत् करोति जनेश्वर।
देवतिर्यङ्मनुष्याख्याचेष्टावन्ति स्वलीलया॥'

'नित्याऽलिङ्गा(ङ्ग्या) स्वभावसंसिद्धिरिन्द्रियाकाराङ्गप्रत्यङ्गव्यञ्जनवती'

---

**ग्रहोपपत्ते रित्यस्य, न हिरण्मयविग्रहसंबन्धानुपपत्तिः परमात्मनः इत्युत्तर**
ाध्येऽवान्तरशङ्कापरिहारः।

**ालिङ्गयेत्यादि।** नित्या। परवासुदेवमूर्तेर्नित्यत्वात्। **अलिङ्ग्या** अप्रतर्क्या।
**सेद्धिः** सत्तयैव भासमाना; स्वप्रकाशा। **इन्द्रियेति।** नयनगोलकादिहस्तपादादि-
ादिपुंस्त्वव्यञ्जकश्मश्र्वादिमतीत्यर्थः। इन्द्रियाकारेति पृथक्पदं वा।

१ – ८.

त्रयो होद्गीथे कुशला बभूवुः शिलकः शालावत्यः, चैकि
दाल्भ्यः, प्रवाहणो जैबलिरिति; ते होचुः—उद्गीथे वै कुशलाः

'उज्जहारात्मनः केशौ सितकृष्णौ'

'अंशांशेनावतीर्योर्व्याम्'

इत्यादिप्रमाणात् नित्यस्य विग्रहस्य अशिथिलसंस्थानस्यैव अप्राकृतानन्तावत
त्वमुपपद्यते। चतुर्मुखदेहस्य संस्थानाशैथिल्येऽपि अनेकदेहोत्पादकत्वदर्शनात्। त
पासकानुग्रहार्थं स्वेच्छासृष्टाप्राकृतशरीरसंबन्धस्य प्रमाणसिद्धस्य परमात्मनि सत्त्व

— न हिरण्मयविग्रहसंबन्धानुपपत्तिः परमात्मनः। अतः अक्ष्यादि
वर्ती परमात्मा।

नन्वादित्यपुरुषादन्यः परमात्मैव नास्तीत्यत्राऽऽह — 'भेदव्य
श्चान्यः'। 'य आदित्ये तिष्ठन् आदित्यादन्तरो यमादित्यो न वेद' इत्या
पुरुषावेद्यस्य तन्नियन्तुः परमात्मनः अन्यस्य प्रमाणसिद्धत्वात् तद्व्यतिरिक्तो ना
न शङ्क्यम्। न च नित्यमुक्तव्यतिरिक्तः परमात्मा नास्तीत्यपि शक्यं
'य आत्मनि तिष्ठन्' इति पर्याये परिशुद्धमुक्तात्मभ्योपि भेदप्रतिपादनात्।

अतः अन्तरादित्ये अन्तरक्षिणि च वर्तमानः परमात्मा — इति स्थि
प्रकृतमनुसरामः।

प्रकारान्तरेणोपासनं विधातुमाख्यायिकामाह – **त्रयो** — **जैबलि**
शालावत्सुतः शिलकनामा, दल्भगोत्रश्चिकितायनसुतः, जीबलसुतः प्रवाहणनामा
स्ते[1] उद्गीथविज्ञाने निपुणा बभूवुरित्यर्थः। **शालावत्यः**। शालावच्छब्दाद
अणि तदन्तात्, स्वार्थे, 'अभिजिद्विदभृच्छालावत्' इत्यादिना यञ् प्रत
**दाल्भ्यः**। दल्भ[2]शब्दात् गोत्रापत्येऽर्थे गर्गादित्वात् यञ्। चिकितायनश

1. त्रय एते ख. त्रय एव. ग. 2. दल्भ्यशब्दात् ख.

नवमखण्डे परोवरीयस्त्वादिविशिष्टाकाशाख्यपरमात्मदृष्टिरुद्गीथे विधास्यते। तदर्था
यिका अष्टमे।

वे कथां वदाम इति ।॥ १ ॥ तथेति ह समुपविविशुः ।

स ह प्रवाहणो जैवलिरुवाच—भगवन्तावग्रे वदताम्; ब्राह्मण-र्वदतोर्वाचँ श्रोष्यामीति ॥ २ ॥

स ह शिलकश्शालावत्यश्चैकितायनं दाल्भ्यमुवाच—हन्त त्वा पृच्छानीति । पृच्छेति होवाच ॥ ३ ॥

का साम्नो गतिरिति । स्वर इति होवाच । स्वरस्य का गतिरिति

जैबिलिः मा.

---

मुषित्वादणि चैकितायनः । जीबलशब्दात् अत इञि जैबलिः । ते —ति । वयमुद्गीथविज्ञाने[2] कुशला भवामः । अतो विद्यावैशद्याय वादकथां र्तयाम इत्यूचुरित्यर्थः । तथेति ह समुपविविशुः । तथा कुर्म इत्यन्यो-एकत्रोपविष्टवन्त इत्यर्थः ।

स — उवाच । प्रवाहणः क्षत्रियः तौ ब्राह्मणौ प्रागल्भ्यादुवाचेत्यर्थः । वाह ] भगवन्तौ — श्रोष्यामीति । भगवन्तौ पूजावन्तौ = ब्राह्मणौ तां वादकथां कुरुताम् । तत्प्रकारं श्रोष्यामीति ।

स — पृच्छानीति । स्पष्टोऽर्थः । [ तत्र दाल्भ्यस्य प्रत्युक्तिमाह — होवाच । स्पष्टम् । ]

[ शिलकः पृच्छति ] का साम्नो गतिरिति । गतिः अयनं प्राप्यमि- [ स दाल्भ्यः ] स्वर इति ह उवाच [ प्रत्युवाच । ] स्वरात्मकत्वात् ते भावः । [ शिलकः पृच्छति ] स्वरस्य — इति । [ दाल्भ्य उत्तरमाह ]

अर्थे इति क. कोशे । 2. विधाने ग. 3. एतदादि ग. कोशे एतत्खण्डे भागः सर्वोऽपि न ।

---

न्नापत्येति ॥ अपत्यार्थत्वे हि द्व्यामुष्यायणत्वकल्पनाक्लेशः । वादकथामिति । भवन्ति वादो जल्पो वितण्डा च । तत्त्वनिर्णिनीषुकथा वादः । अन्ये विजिगीषु-था विचारः । एकत्रेति । समित्येकीकारे । संभूयोपविविशुः । तेन एकत्रेति लब्धम् । गतिरिति । प्रश्नवाक्यानन्तरं पप्रच्छेत्येवं पृथक्क्रियापदाप्रयोगात्, उत्तरवाक्ये परं एकवाक्यत्वं युक्तमित्याशयेन, इति पृष्टो दाल्भ्य इत्येवमध्याहरिष्यति । इयं रीतिः परितनखण्डादावपि भाव्या ।

प्राण इति होवाच। प्राणस्य का गतिरिति। अन्नमिति होवाच। का गतिरिति। आप इति होवाच॥ ४॥

अपां का गतिरिति। असौ लोक इति होवाच।

अमुष्य लोकस्य का गतिरिति। 'न स्वर्गं लोकमतिनये' दि वाच—'स्वर्गं वयं लोकँ सामाभिसँस्थापयामः; स्वर्गसँस्तावँ हि मे' ति॥ ५॥

तँ ह शिलकश्शालावत्यश्चैकितायनं दाल्भ्यमुवाच—अप्रति किल ते दाल्भ्य! साम; यस्त्वेतर्हि ब्रूयात्, 'मूर्धा ते विपतिष्य मूर्धा ते विपतेदिति॥ ६॥

---

**प्राण** —। प्राणनिर्वर्त्यत्वात् स्वरस्येति भावः। एवमुत्तरत्राप्यौचित्यमनुसं [अपां का गति' रिति पृष्टो दाल्भ्यः] **असौ लोक** इति होवाच। द्युः वृष्टिप्रभवादिति भावः।

[अमुष्य लोकस्य का गतिरिति पृष्टो दाल्भ्यः आह] **न स्वर्गं** स्वर्गं लोकमतीत्य[1]परमाश्रयान्तरं साम न नयेत्। स्वर्गलोकव्यतिरिक्तमाश्रयान्तरं प्रापयेदित्यर्थः। न वदेदिति यावत्। **स्वर्ग—सामेति**। अतो वयम अभि साम प्रति आश्रयत्वेन स्वर्गं लोकं सम्यक् स्थापयामः। [**हि**[2] यस्मा **स्वर्गसंस्तावम्** 'स्वर्गो वै लोकः सामवेदः' इति श्रुत्या स्वर्गत्वेन साम्नः स्त त्वादित्यर्थः।

**तं ह शिलकः — विपतेदिति**। "हे दाल्भ्य! अप्रतिष्ठितं स्व सामगतिपरम्पराविश्रान्तिभूमिं वदतस्तव मते साम अप्रतिष्ठितमेव स्यात्। ए समये यः कश्चिदागत्य, 'वादकथायामयुक्तमर्थं प्रतिजानानस्य ते मूर्धा विपतिष्य यदि ब्रूयात् — तदा विपतेदेव ते[3]मूर्धा। न संशयः। मया तु सौहार्दा नोक्तम्। अतो जीवसि" इति शिलक उक्तवानित्यर्थः।

1. अतीत्यापरं क. 2. एवं कुण्डलितं सर्वं ग. कोशे न।

---

3. यःकश्चिदित्यादि। य इत्यस्य प्रतिसंबन्धि तेनेतिपदं मूर्धेतिवाक्येऽध्याहार्यं विवक्षया।

न्ताहमेतद् भगवन्तो वेदानीति । विद्धीति होवाच । अमुष्य का गतिरिति । अयं लोक इति होवाच ।

मस्य लोकस्य का गतिरिति । न प्रतिष्ठां लोकमतिनयेदिति होवाच ; ायं लोकँ सामाभिसँस्थापयामः ; प्रतिष्ठासँस्तावँ हि सामेति ॥ ७ ॥

। ह प्रवाहणो जैवलिरुवाच—अन्तवद्वै किल ते शालावत्य ! साम ; ई ब्रूयात्, 'मूर्धा ते विपतिष्यती' ति, मूर्धा ते विपतेदिति ॥

न्ताहमेतद् भगवन्तो वेदानीति । विद्धीति होवाच ॥ ८ ॥

इति प्रथमाध्याये अष्टमः खण्डः

---

भगवतः शां. भा.

न्त — विद्धीति होवाच । तर्हि अहं सामगतिपरम्पराविश्रान्तिभूमिं नीयामिति [ दाल्भ्येन ] प्रार्थितः [ शिलकः ] तथेत्युक्तवानित्यर्थः । [अनु- ाः पृच्छति ] अमुष्य — इति । [ शिलक उत्तरमाह ] अयं लोक—। ामादिभिर्भूलोकस्य स्वर्गोपजीव्यत्वादिति भावः ।

अस्य — सामेति । पृथिवीलोकस्य का गतिरिति दाल्भ्येन पृष्टः शि- ष्ठां पृथिवीलोकमतिक्रम्य सामगतिपरम्पराविश्रान्तिभूमिमन्यः कश्चिदपि न अन्यत्र कश्चिदपि वदेत् ) । अतो वयमपि तथैव वदामः । 'इयं वै ' इति श्रुत्या साम्नः प्रतिष्ठालोकत्वेन स्तूयमानत्वात् । स्वर्गस्य ज्योतिश्च- बम्भ्रम्यमाणत्वेन प्रतिष्ठात्वाभावेऽपि पृथिव्यास्तु स्थिरत्वात् प्रतिष्ठात्वम् नेत्यर्थः ।



ा ह प्रवाहणः — साम । अन्तवतीं पृथिवीं ... परम्पराविश्रान्ति- प्रतिजानानस्य ते मते साम अन्तवदेव स्यादित्यर्थः । ... होवाच । ।

हन्ताहमेतदित्यादि शिलक आह । विद्धीति ...होवाचेत्यर्थः ] ।

---

ावन्त इति । अज्ञातार्थोपदेष्टृत्वात् क्षत्रियेऽपि प्रवाहणे आचार्यत्वाभिसंधिः । दाल्भ्यात् ाकः ; ततः प्रवाहणः ।

१—९

अस्य लोकस्य का गतिरिति । "आकाश" इति होवाच
र्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते ; आकाशं
यन्ति ; आकाशो ह्येवैभ्यो ज्यायान् ; आकाशः परायणम् ॥ १

स एष परोवरीयान् उद्गीथः ; स एषोऽनन्तः ।

---

[एवमनुमतः शिलको राजानं पृच्छति] अस्य–होवाच । अस्य पृथि का गति'रिति शालावत्येन पृष्टः प्रवाहणः, आकाश इत्युक्तवानित्यर्थः । अत्र ते=प्रकाशते, आकाशयतीति वा व्युत्पत्त्या आकाशशब्दो ब्रह्मपरः ; 'आक नामरूपयोर्निर्वहिते'त्यादौ आकाशशब्दस्य ब्रह्मण्यपि प्रसिद्धत्वात् ; न तु भू इति द्रष्टव्यम् । तदेव गतित्वं प्रपञ्चयति सर्वाणि ह—यन्ति । चिदां प्रपञ्चः आकाशादेवोत्पद्यते ; तत्रैव लीयत इत्यर्थः । आकाशो—ज्य ज्यायस्त्वं नाम सर्वैः कल्याणगुणैः सर्वेभ्यो निरतिशयनिरुपाधिकोत्कर्षः । परायणम् । परायणत्वं परमगतित्वम् । परमप्राप्यत्वमिति यावत् ।

स एष परोवरीयानुद्गीथः । [2]वरः उत्कृष्टः । वरीयान् उत्क वरीयसामपि वर(पर) इत्यर्थः । अत्र परःशब्दः सकारान्तो द्रष्टव्यः । आकाश उद्गीथः । परमात्मदृष्टिविशिष्ट उद्गीथ इत्यर्थः । उद्गीथे एतादृशा कर्तव्येति यावत् । स एषोऽनन्तः । उद्गीथेऽध्यस्यमानोऽयमाकाशः अनन्त रिच्छिन्न इत्यर्थः । ततश्चानन्तस्य आकाशशब्दितस्य परमात्मन एव सामगति विश्रान्तिभूमित्वात् मत्पक्षे, 'अन्तवद्वै किल ते साम' इत्युक्तः अन्तवत्त्व प्रसरतीति भावः ।

1. प्रश्नोत्तरवाक्ये पृथक् धृत्वा, 'का गतिरितीत्यर्थः', 'इति शालावत्येन — इत्युक्तवानित्यर्थः' इति पृथग्व्याख्यानमुद्रणं ख. कोशे । 2. अयं क. पाठः । 'पर वरीयसामपि पर इत्यर्थः' ख. पर उत्कृष्टो वरीयान् वरीयसामपि परः ग. परमोत्कृ यान् वरीयसामपि वरः घ.

---

परोवरीयानिति । दाल्भ्येन सामगतिकाष्ठात्वेनोक्तात् स्वर्गात् वरीयान् अयं ततोऽपि परः प्रवाहणोक्त आकाशः परोवरीयान् ।

ो हास्य भवति; परोवरीयसो ह लोकान् जयति; य एतदेवं परोवरीयाँसमुद्गीथमुपास्ते ॥ २ ॥

तँ हैतमतिधन्वा शौनक उदरशाण्डिल्यायोक्त्वोवाच, 'यावत्त[1] (न्त) जायामुद्गीथं वेदिष्यन्ते, परोवरीयो हैभ्यस्तावदस्मिन् लोके जीवनं ते ॥ ३ ॥ तथाऽमुष्मिन् लोके लोक' इति। स य एतमेवं विद्वान् परोवरीय एव हास्यास्मिन् लोके जीवनं भवति, तथाऽमुष्मिन् ाक" इति, लोके लोक इति।

इति प्रथमाध्याये नवमः खण्डः

यावत्ते. शां. भा.

**परोवरीयो—मुपास्ते**। यः परोवरीयांसमेतमाकाशशब्दितं परमात्मानं आकाशत्वेनोद्गीथमुपास्ते, तस्य परोवरीयस्त्वगुणकं जीवनं भवति। परोव- णकसकललोकावासिश्च भवति।

प्रवाहणः स्वो[1]क्तार्थं संवादयति **तं—उवाच**। अतिधन्वनामा शुनकसुतः डल्याय ऋषये—उदरशब्देन संततिर्लक्ष्यते। संततिशाली शाण्डिल्य तस्मै—एनमुद्गीथमुक्त्वा अन्यदप्युवाचेत्यर्थः। किं तदित्यत्राह—**या- भविष्यति**। **वेदिष्यन्त** इत्येतद् व्यत्ययेनात्मनेपदम्। **प्रजायां** त्वत्संततौ पुरुषा एनमुद्गीथमुपासिष्यन्ते, तेषामुत्कृष्टमिह लोके जीवनं भविष्यतीत्यर्थः। **ष्मिन् लोकेलोक इति**। तथा सर्वेस्मि (अमुष्मि) न्नपि परलोके भविष्य- । **परोवरीयो जीवनमि**त्यनुषङ्गः। लोकेलोक इति वीप्सायां द्विर्वचनम्। **तिधन्वा उवाचे**ति पूर्वेणान्वयः। अत इदानीन्तनानामपि तद्विदां तत् त्याह–**स य—लोकेलोक इति** [2]स्पष्टोऽर्थः। **लोकेलोक इति**। **लोके- ोति** द्विरुक्तिर्विद्यासमाप्त्यर्था।

. स्वेति क कोशे न। 2. इदं न ग. कोशे।

रोवरीय इत्यस्य **जीवनमि**ति विशेष्यमुत्तरवाक्यलभ्यम्। **अमुष्मिन् लोके** र वीप्सा उपरितनसर्वप्राकृतलोकग्रहणार्था।

एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते—समन्वयाध्याये पादे—उद्गीथे अभ्यस्योपास्यमानाकाशो भूताकाश एव । आकाशशब्दस्य काशे रूढत्वेन रूढाकाशशब्दाभ्यासादिति पूर्वपक्षे प्राप्ते—उच्यते — ' शस्तल्लिङ्गात् ' । आकाशशब्दाभिधेयः परमात्मा । निखिलजगदेककारणत्व ज्यायस्त्व परायणत्वा[1]दीनां परमात्मलिङ्गानां भूताकाशे असंभवात् । काशस्याचेतनवर्गं प्रति कारणत्वसंभवेऽपि चिदचिद्वर्गकारणत्वासंभवात् । कल्याणगुणैः सर्वोत्कृष्टत्वलक्षणज्यायस्त्वस्याप्यसंभवात् अचेतनस्य । स्वरूपभिः मोक्षविरोधितया च[2] हेयस्य शब्दादिनिषिद्धविषयप्रावण्यजनकतया सकलपुरु विरोधिनः अचेतनस्य परायणत्वलक्षणप्राप्यत्वस्य[3] चासंभवात् । तस्य [4]च, साम्नो गतिः ', ' अस्य लोकस्य का गतिः ' इत्युपक्रमलक्षणतात्पर्यलिङ्गेन प्रति दयिषितत्वावगमात् । [5]तथा, ' अन्तवद्वै किल ते दाल्भ्य साम ' इति पूर्वि लोकस्यान्तवत्त्वोक्तिदूषणपूर्वकमुपक्षिप्तस्य, ' स एषोऽनन्तः ' इत्यनन्तत्वलिङ्गे प्रतिपिपादयिषितत्वावगमात् । प्रतिपिपादयिषितपरायणत्वानन्तत्वपरोवरीयस्त्वादिलिङ्ग रोधे अभ्यस्ताया अपि श्रुतेर्दुर्बलत्वात्[6] आकाशशब्दः[7] आकाशते आका तीति वा योगवशेन परमात्मपर एव ।

ननु, ' सर्वाणि ह वा इमानि भूतानी'ति श्रुत्यैवाऽऽकाशस्य जगत्कारण ऽऽवेदनात्[8] यथाश्रुताकाशस्यैव जगत्कारणत्वमभ्युपेतव्यमिति चेन्न — ' स सोम्येदमग्र आसीत् ', ' आत्मा वा इदमेक एवाग्र आसीत् ', ' एको ह वै रायण आसीत् ' इत्यादियोग्यार्थाननुवादरूपबहुवाक्यविरोधे एकस्यानुवादरूपस्या ग्यार्थस्यास्य वाक्यस्य [9]दुर्बलत्वेन स्वार्थप्रतिपादनसामर्थ्याभावात् । अत आकाशश यौगिक्या वृत्त्या ब्रह्मपर एव ।

1. आदिपदं न ख. कोशे । 2. अयं चकारः जनकतयेत्येतदनन्तरम् ; हेयशब्दा च समस्तम् ख. कोशे । ग. कोशे चकारोऽत्रैव हेयशब्देति तु पाठः । 3. प्राप्यत्वासंभवा परायणत्वलक्षणप्राप्यत्वस्य च क. 4. चकारो न ख. कोशे । 5. तथेत्यादि—गमादि क. कोशे । 6. दुर्बलत्वाच्च ख. 7. आकाशशब्दश्च क. ख. 8. त्वावगमात् 9. अस्य वाक्यस्येति क. कोशे न ।

हेयेति पाठे तत् निषिद्धविषयेऽन्वेति । योग्यार्थेति वाक्यविशेषणम् ।

त्वत्र व्यासार्यैः, ' अर्थाविरोध एव रूढिप्राबल्यमित्यपशूद्राधिकरणनयो-
यवशक्त्या निर्वाहो भाष्ये उक्तः । रूढ्यपरित्यागेन अपर्यवसानवृत्त्या
दस्याकाशशरीरकपरमात्मपरतया निर्वाहोऽप्यभिमतः ' इत्युक्तम् — तत
भवप्रदर्शनमात्रपरम् ; न तु प्रकृताभिप्रायम् । अनन्यथासिद्धभूताकाश-
एव, ' जीवमुख्यप्राणलिङ्गात् ' इति सूत्रोक्तन्यायावतारात् ।

' परविद्यासु जीवोक्तिर्निरुक्त्यादेः पराश्रया ।
तल्लिङ्गानन्यथासिद्धौ तद्विशिष्टावलम्बिनी ॥ '

केः । [1]भूताकाशशरीरकाद् ब्रह्मणः सकलचेतनाचेतनवर्गोत्पत्त्य-
सर्वाणि ह वा इमानि [4]भूतान्याकाशादेव समुत्पद्यन्ते ' इत्यत्राकाशशब्दस्य
रीरकब्रह्मप्रतिपादकत्वासंभवात् । न चाकाशावस्थस्य ब्रह्मणो निखिल-
भवेऽपि आकाशावस्थोपलक्षितस्य तत् संभवतीति वाच्यम् — तथा
शशब्दस्यात्यन्तामुख्यत्वप्रसङ्गादिति द्रष्टव्यमिति स्थितम् । प्रकृतमनु-
१—९.

भूताकाशेत्यादिसर्वस्थाने ' भूताकाशशरीरकब्रह्मप्रतिपादकत्वासंभवाच्चेति द्रष्टव्यमित्ये·
कोशे । ग. कोशे न चेत्यादि न ।

र्थविरोध एवेति । रूढ्यर्थविरोधे तु शूद्रपदस्य शोचितृत्वरूपयोगार्थवत् प्रकृतो·
र्थो गृह्यते इति भावः । आचार्योक्तेरिति । न्यायसिद्धाञ्जन इति शेषः । न
। व्यासार्यैरपि, ' साक्षादप्यविरोधम् ' इत्यत्र एवमेवोक्तेः । नन्वेवं सति पाञ्चरात्रा-
न्तसूत्रभाष्यविरोधः, तत्र, " यथा आकाशप्राणादिशब्दाः " इति अपर्यवसानवृत्ति-
अत आचार्यकारिकायामपि, ' निरुक्त्यादेः ' इति आदिपदेनापर्यवसानवृत्तिरपि
ङ्गानन्यथासिद्धौ अपर्यवसानवृत्तिमात्रम्, अन्यत्र तु ..यमपीति भेद इति चेत्—उच्यते ।
र्यवसानवृत्तेश्चाविशेषेण स्वीकारे उपास्याकारभेदेनाष्टदोषदुष्टविकल्पापत्तेः केनापि विनि-
देवार्थो विवक्षणीयः । सकृत्प्रयुक्तशब्दनयाच्च । तत्र यद्यपि अपर्यवसानवृत्तौ प्रथम
त्यागाल्लाघवम्—तथापि भूताकाशान्तर्यामित्वेन रूपेण सर्वकारणत्वाभावादर्थस्वारस्य-
ई अनन्यथासिद्धं लिङ्गं किमप्यस्ति, येन असारस्येऽपि तद्विवक्षा कर्तव्या स्यात् ।
भावाद् योगव्युत्पत्तिः । अत एव सूत्रकृता इन्द्रप्राणाधिकरण एव अन्तर्यामिपर्य-
शास्त्रदृष्टः प्रदर्शिता । न तु पूर्वम् । पाञ्चरात्राधिकरणभाष्यं तु यत्रापर्यवसानवृत्ति-
ई भवितुमर्हति, तत्स्थलाभिप्रायं नेयमिति ।

१—१०

मटचीहतेषु कुरुषु आट[1](टि)क्या सह जाययोषस्तिर्ह चा इभ्यग्रामे प्रद्राणक उवास ॥ १ ॥

स हेभ्यं कुल्माषान् खादन्तं बिभिक्षे। तँ होवाच—, 'ने विद्यन्ते, यच्चये[2] मे इमे उपनिहिता' इति ॥ २ ॥

1. आटक्या, सा. आटिक्या. शां. 2. यच्चये इत्यत्र यच्च ये इति (चशब्दोऽवधारणे यत् यस्मात्)। शांकरे तु चये इत्येव पदम्। मुद्रणे तु प्रमादः।

---

प्रस्तावोद्गीथप्रतिहारभक्तित्रयविषयकोपासनानि विधातुमाख्यायिकामा मटची — उवास। चक्रस्य सुतः उषस्तिनामा कश्चन ऋषिः मटचै अश्मवृष्टिकृतदुर्भिक्षदूषितेषु कुरुदेशेषु आट(टि)क्या अनुपजातपयोधर अनया भार्यया सह इभ्यानां गजारोहाणां ग्रामे अनशनेन[1] प्रद्राणकः ( गतिमापन्नः ब्रह्मविद्याया निष्पत्तये प्राणानामनवसादं काङ्क्षन्नुवास। द्रा ( गतौ इति हि धातुः। चक्रस्य गोत्रापत्यमित्यर्थे "अश्वादि"त्वात् फञि[2] चा इति रूपम्।

स — बिभिक्षे। सोऽन्नार्थी अटन् कुल्माषान् कुत्सितान् खादन्तमिभ्यं याचितवान्। 'कुल्माषादञि[3]' इति निर्देशात् कुत्सितमाषार्थे ( षशब्दस्य साधुत्वम्। तं—निहिता इति। इतः मया भक्ष्यमाणादुच्छि कुल्माषा अन्ये न विद्यन्ते। यत् यस्माद्धेतोः इमे कुल्माषाः मे चये मे भक्ष्यमाणे चये उच्छिष्टराशौ उपनिहिताः प्रक्षिप्ताः। अतः किं करोमीत्य मिभ्य उवाचेत्यर्थः।

1. प्रद्राणकः अनशनेन. ख. ग. 2. फञि ख. 3. अञि"ति. ख.

---

मटच्यः अशनय इति शाङ्करम्। अदनमर्हतीति आटिकी। बहिरधिकं पयो स्त्वाद्यनुपजातव्यञ्जनात्वमेव। अन्यादृशीनां गृह एव स्थितेः। चये इति। 'समुदा गणः' इत्यमरः। शाङ्करेऽपि चये इत्येव पदच्छेदः।

'एतेषां मे देही' ति होवाच। तानस्मै प्रददौ। 'हन्तानुपानम्'
उच्छिष्टं वै मे पीतँ स्या' दिति होवाच॥ ३ ॥ 'न स्विदेतेऽप्यु-
इति। न वा अजीविष्यमिमानखादन्' इति होवाच, 'कामो
न' मिति॥ ४॥
ह खादित्वाऽतिशेषान् जायाया आजहार। साऽग्र एव सुभिक्षा
तान् प्रतिगृह्य निदधौ॥ ५॥
ह प्रातः संजिहान उवाच, 'यद् बतान्नस्य लभेमहि, लभेमहि

एतेषां–होवाच। उच्छिष्टानामपि मध्ये मे मह्यमपि किञ्चिद् देहीति इभ्यमृषिः
इत्यर्थः। तानस्मै प्रददौ। तान् कुल्माषान् उषस्तये इभ्यो दत्तवानित्यर्थः।
वाच। अथ समीपस्थमुदकं गृहीत्वा 'हन्त! गृहाणानुपानमिति इभ्येनोक्तः
तदुदकपाने" उच्छिष्टोदकपानं मे स्यादिति प्रत्युवाचेत्यर्थः। न स्वित्–
। 'किमेते इदानीं त्वया मत्तो गृहीताः कुल्माषा अनुच्छिष्टा' इति इभ्येन
ऋषिः[4], 'कुल्माषाखादने स्वस्य जीवनहानिर्भवति। तावन्मात्रखादनेन
स्वस्योच्छिष्टोदकपानं कामः कामकारितं निषिद्धं स्या'दित्युवाचेत्यर्थः।

–आजहार। सः उषस्तिः[5]स्वयं किञ्चिद् भक्षयित्वा अतिशिष्टान् अवशिष्टान्
वानित्यर्थः। सा निदधौ। सा जाया अग्रे प्रागेव सुभिक्षा लब्धान्ना बभूव।
स्वभावात् अनवज्ञाय तान् कुल्माषान् पत्युर्हस्तात् प्रतिगृह्य निक्षिप्तवती।

— धनमालाम्। स होषस्तिः प्रातः संजिहानः शयनं परित्यज-
शृण्वत्यामिदमुवाच। किं तत्?। [6]यदि अन्नस्य स्तोकमपि लभेमहि,

न्तेति क. कोशे। 2. स ऋषिरिति ग. कोशे न। 3. पानेन ख. ग. 4. ऋषि-
शे न। 5. स्वयं किञ्चिदित्येतत्स्थाने 'तान्' इति ग. कोशे. 6. यत् ग.

मिति षष्ठीप्रयोगात् अंशमात्रभिक्षणमुषस्तिकृतम्। इभ्यस्तु महानयं ब्राह्मणः
माषत्वमदीयत्वोच्छिष्टत्वेषु प्रार्थयत इति प्रीत्या सर्वानपि कुल्माषान् प्रकर्षेण ददौ।
तिशेषान्' इति वक्ष्यति। अनुपानञ्चात एव तदैव आहयितुं प्रायतत। तदाह
दौ। हन्तानुपानम् इति।
खादित्वेति उपरि कथनात् खादनं ततो निष्क्रम्य गत्वा मध्येमार्गमिति ज्ञायते।
बालात्वाद्वा स्वयं प्राणात्ययापत्तिदशाप्राप्तेर्वा साधुभिक्षितशमितक्षुत। इदमुषस्ति-

धनमालाम्; राजाऽसौ यक्ष्यते; स मा सर्वैरार्त्विज्यैर्वृणीते 'ति ।
तं जायोवाच, 'हन्त पते! इम एव कुल्माषा' इति । तान् खा
यज्ञं विततमेयाय ॥ ७ ॥ तत्रोद्गातॄन् आस्तावे स्तोष्यमाणानुपो

स ह प्रस्तोतारमुवाच, ॥ ८ ॥ 'प्रस्तोतर्या देवता प्रस्त
यत्ता, तां चेदविद्वान् प्रस्तोष्यसि, मूर्धा ते विपतिष्यती' ति ॥ ९

तेन प्राणान् धृत्वा धनमालाम् अल्पधनं लभेमहीत्यर्थः । कथं धनमा
इत्यत्राह — राजाऽसौ — वृणीतेति । राजाऽसौ नातिदूरे यजते, स
सर्वाणि आर्त्विज्यानि त्वया कारयितव्यानीति [ मां ] प्रार्थयेतेत्युवा
तं — कुल्माषा इति । 'हे पते! ये मद्धस्ते[1] निक्षिप्ताः त्वया
त इम एव । एतान् गृहाणे'ति जाया प्रत्युक्तवतीत्यर्थः । तान् —
तानेव पर्युषितोच्छिष्टान् कुल्माषान् भक्षयित्वा विततं विस्तीर्णं यज्ञं गतवा

तत्र — उपविवेश । आस्तुवन्त्यस्मिन् इति आस्तावः स्तोत्र
सदसि स्तोतुं प्रवृत्तानां उद्गातृप्रस्तोतृप्रतिहर्तॄणां उप समीपे उपविष्टवानित्य

स — विपतिष्यतीति । [ सः उषस्तिः प्रस्तोतारं प्रति इ
त्यर्थः । उक्तिमेवाह प्रस्तोतः—।] हे प्रस्तोतः! प्रस्तावमन्वायत्ता प्रस
अध्यस्य या देवता उपास्या, तामविदित्वा यदि विदुषो मम समीपे प्रस
मूर्धा ते विपतिष्यतीत्यर्थः । यद्यपि, 'तेनोभौ कुरुतो यश्चैतदेवं वेद, यश्च

1. मद्धस्त ख.

धृत्तम्, 'सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात' इति सूत्रे दर्शितम्। वक्ष्यते च तदर्थं
प्राणविद्यायाम् । (5.1.)

उद्गातॄनिति । 'इदं बहुवचनान्तत्वान्नोद्गातृमात्रपरम्' किंतूच्चगानकर्तॄन्इतर
एतत्सूचनाय भाष्ये 'प्रस्तोत्रुद्गातृ' इत्यनुक्त्वा उद्गातृप्रस्तोत्रित्युक्तम् । अत्र उ
द्वितीयाया अन्वयाय आगत्येत्यध्याहृतं शाङ्करे ।

प्रस्तावभक्तावध्यस्येति । ननु अन्वायत्ता देवतेत्यस्य अधिष्ठातृदेवते
पर्याप्तत्वात् किमिति अध्यस्योपास्येत्यर्थः? । अत एव, 'प्रस्तावप्रतिहारविषयमप्युपासनं म
इति शाङ्करमपि विमृश्यम्। पूर्वं, 'स एष परोवरीयानुद्गीथ'इति उद्गीथे आकाशादि
समानाधिकरणनिर्देशादवसीयते, न तथाऽत्र किञ्चित् । किञ्चात्र प्रस्तावादौ प्राणादिह
किं तत्फलम्? अनुक्तेः । कर्मवीर्यवत्तरत्वमेव सामान्यश्रुतिसिद्धमिति चेत्—तर्हि एकत्र

**एवमेवोद्गातारमुवाच, 'उद्गातर्या देवतोद्गीथमन्वायत्ता, तांश्चेद्-द्गास्यसि, मूर्धा ते विपतिष्यती' ति ॥ १० ॥**

**एवमेव प्रतिहर्तारमुवाच, 'प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता, तांश्चेद्विद्वान् प्रतिहरिष्यसि, मूर्धा ते विपतिष्यती' ति ।**

**ते ह समारतास्तूष्णीमासाञ्चक्रिरे ॥ ११ ॥**

इति प्रथमाध्याये दशमः खण्डः

---

अविदुषोऽप्यार्त्विज्याधिकारोऽस्ति — तथापि विद्वत्संनिधौ अविदुषः ारो नास्तीति भावः । **एवमेव — विपतिष्यतीति** । पूर्ववदर्थः । — । स्पष्टोऽर्थः । ते — **आसाञ्चक्रिरे,** ते ह प्रस्तोत्रादयः **समारताः** सन्तः मूर्धपातभयात् तूष्णीमेव स्थिता इत्यर्थः ।

---

ःसद्धो अन्यदृष्टिद्वयविधानं व्यर्थम् । एकस्मिन् प्रयोगे त्रीन् पुरुषानुद्दिश्य तिसृणां देश , तदनुष्ठानश्च न एकं फलमुद्दिश्य भवितुमर्हति । **एत एव समतिसृष्टाः स्तुव-** त्र दर्शितमेव त्रिभिरप्युपदिष्टोपयोजनम् । अतः, पूर्वम्, 'आशीस्समृद्धिरुपसरणानि' ग्रा अपेक्षितफलसमृद्धिकरमधिष्ठातृदेवताचिन्तनमेवात्र प्रतीयते । प्राणाधिकरणश्रुत-ामपि, 'उद्गीथप्रतिहारयोर्देवतात्वेन अन्नादित्यावुक्तौ' इत्येतावदेव प्रकाशितम्–इति त्यम् । अथापि उद्गीथदेवताया आदित्यस्य कथनावसरे, **उच्चैरसन्तं गायन्तीति** र्थसंक्रमणेन तदुपवर्णनमन्तरादित्यविद्यायामिव तत्र तद्दृष्टिं द्योतयति । तथा प्रति-या अन्नस्य, 'प्रतिहरमाणानि' इति प्रतिहारशब्दार्थान्वयेन वर्णनमपि । एवञ्च प्रस्ताव-द्रष्टव्यम । प्रस्तावो हि अप्रकाशस्याभिनवः प्रकाशः । **अभिसंभवन्ति, उज्जिहत** इति ाच्यते । **अन्वायत्तेति** पदमपि नाभिष्ठातृवाचि । प्रत्युत देवतायत्तमधिष्ठेयम् । अत (१-९-२) अन्वायत्तानीत्यस्य उपजीवन्तीत्यर्थ उक्तः । सादृश्यार्थे च **अनुशब्दो**ऽनुशिष्टः, दृश्ययोरनु' इति । श्रुतप्रकाशिकायामपि देवतात्वेनेत्यस्य अध्यस्योपास्यदेवतात्वेनेत्यर्थो शाङ्करार्थानुवादरूपत्वात् तदभिमत एव तदर्थः । अतः प्रकृते एवमुचितम् । किमिति ति चेत्–विनिगमनाविरहात् । त्रयोऽपि चादौ भर्त्सिताः । त्रीनप्युपसन्नान् प्रति ष्टयश्चोपदिष्टः । तथा तदैव गृहीत्वाऽनुष्ठीयमानासु या काचित् सम्यङ्निष्पन्ना धं फलिष्यति । अन्यथा आशीस्समृद्धिप्रकरण एव सर्वमिदं श्रुत्योक्तं स्यात्, सङ्कलसि-शयः ।

१–११.

अथ हैनं यजमान उवाच, 'भगवन्तं वा अहं वि
'उपस्तिरस्मि चाक्रायण' इति होवाच ॥ १ ॥ स होवाच,
अहमेभिः सर्वैरार्त्विज्यैः पर्यैषिषम्; भगवतो वा अहम
वृषि ॥ २ ॥ भगवाँस्त्वेव मे सर्वैरार्त्विज्यैः' इति । 'तथे
तर्हि एत एव समतिसृष्टाः स्तुवताम्; यावत्त्वेभ्यो[2] धनं द
दद्या' इति । 'तथे' ति ह यजमान उवाच ॥ ३ ॥

1. अवित्त्या. शां. मा. 2. यावत्तेभ्यः मा.

---

अथ–विविदिषाणीति । को भवानिति भवन्तं ज्ञातुमिच्
यजमान उक्तवानित्यर्थः । उषस्तिरस्मि–उवाच । स ऋषिरिति शेषः

स — अवृषि । तमृषिं यजमान उवाच । किमिति ।
गुणोपेतं श्रुत्वा सर्वाण्यार्त्विज्यानि भगवदधीनानि कर्तुं पर्यैषिषम्
कृतवानस्मि । भगवतः अविद्या –[1] विदिः लाभः । 'इक् कृष्य
इक् । सा न भवतीत्यविदिः । तया अविद्या — अलाभेन[2] इम
अवृषि वृतवानस्मीत्यर्थः । भगवांस्तु–आर्त्विज्यैरिति । इतःपर
सर्वैः आर्त्विज्यैः ऋत्विक्कर्मभिर्वृत इत्युवाचेत्यर्थः । सर्वार्त्विज्यार्थं वृत

तथेति — दद्या इति । अत (थ?) उषस्तिः तथेत्यभ्युप
'त्वया पूर्वं वृता एत एव मया समतिसृष्टाः सम्यक् प्रसन्नेनानुज्ञाताः
तास्सन्तः स्तुवतां स्तुवन्तु । किन्तु एभ्यो यावद् धनं प्रयच्छसि,
दद्याः इत्युक्तवानित्यर्थः । तथेति ह यजमान उवाच । स्पष्टोऽर्थः

1. विदिर्लाभः । न विदिरविदिः । इक् कृष्यादिभ्य इति इक् । अविद्या
2. अलाभेनेत्यर्थः क.

---

एभिः सर्वैरार्त्विज्यैरिति । एभिः सामवेदसंबन्धिभिः । आर्त्विज
'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति कर्मणि ष्यञ् । अविद्येति । अत्र '
शाङ्करादिपाठः । अवित्तिरलाभः । भगवांस्त्वेवेति । अत्र राज्ञा क्रियापदाप्रयं
व्यनक्ति । राज्ञो वैयाकुलीञ्च दर्शयति । 'पूर्वमेभिरार्त्विज्यैरुद्दिष्टः वरणार्थमन्वेषि
पश्चादिमे वृता आसन् । पुनर्वरीतुमिष्टश्च । वृतानां निरासो युज्येत किम्? भगवत
संबन्धे संप्रत्युपायं भगवानेव ब्रवीतु' इत्येवम् । समतिसृष्टाः । अतिसर्गः
'प्रैषातिसर्गे' त्यत्र प्रसिद्धम् । स चानुज्ञैव । ममेति । मह्यमिति वक्तव्ये ममेत्युप
मृष्टेः तत्र स्वार्थलाभसंभावः सूच्यते ।

अथ हैनं प्रस्तोतोपससाद, "प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता, तांचेदविद्वान् प्रस्तोष्यसि मूर्धा ते विपतिष्यती"ति मा भगवानवोचत्; कतमा सा देवते" ति ॥ ४ ॥

"प्राण" इति होवाच, "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति; प्राणमभ्युज्जिहते; सैषा देवता प्रस्तावमन्वायत्ता; तां चेदविद्वान् [1]प्रास्तोष्यो मूर्धा ते व्यपतिष्यत् तथोक्तस्य मये" ति ॥ ५ ॥

1. प्रस्तोष्यः मा.

---

अथ हैनं प्रस्तोतोपससाद। उषस्तिवचनं श्रुत्वा प्रस्तोता विनयेन तत्समीपं गतवानित्यर्थः। प्रस्तोतर्या — देवतेति। भगवान् मां प्रति, प्रस्तोतर्या देवतेत्यादिना यां देवतामवोचत् उक्तवान्, सा देवता केति प्रस्तोता तमृषिं पप्रच्छेत्यर्थः।

प्राणः — । प्राण एव प्रस्तावमन्वायत्ता देवतेत्युषस्तिरुवाचेत्यर्थः। अत्र प्राणशब्दस्य ...गयोगात् प्राणशब्देन परमात्मोच्यते। [अत एव] प्राणशब्दस्य मुख्यप्राणपरत्वं ...ते सर्वाणि—अन्वायत्ता। [2]प्राणमेवाभि प्राणमभिलक्ष्य। प्राणे इति यावत्। ...त। समित्यैकीकारे। ऐक्येन विशन्ति। लीयन्त इत्यर्थः। प्राणमभ्यु- ... प्राणादेवोद्गच्छन्तीत्यर्थः। सैषा[3] सर्वभूतलयोत्पत्तिस्थानत्वेन वेदान्तेषु प्रसिद्धा देवता प्रस्तावभक्ति[4]मन्वायत्ता अनुगता=प्रस्तावभक्तौ अध्यस्योपास्येत्यर्थः। ...ति। 'तां चेदविद्वान् प्रस्तोष्यसि, मूर्धा ते विपतिष्यती'ति मदुक्तवनन्तरमपि ...ादृत्य तद्देवतामनभिज्ञाय यदि प्रास्तोष्यः, तदा मूर्धा ते व्यपतिष्यदेव। अतः त्वया मत्समीपमागत्य विनयेन पृच्छतेति भावः। अत्र मूर्धा ते व्यपतिष्यत् ...य मयेत्युक्त्या विदुषैवमुक्तस्याविदुषः तदनादरेण कर्मकरणे प्रत्यवायः, न ...ऽनु[5]क्तस्याप्यविदुष इति भावः। [6]व्यासर्यैस्तु मूर्धा ते व्यपतिष्यदित्यस्य, ...न लभ्येतेत्यर्थ इति आत्मसत्ताहानिपर्यन्तः प्रत्यवायो वर्णितः।

---

...समीपमागतवान्. 2. अन्वायत्ता प्राणमभिलक्ष्य संविशन्ति. ख. 3. सैषेति ख. 4. भक्तयनुगता ख. 5. अनुमतस्य. ख. 6. व्यासार्यैरित्यादिवाक्यं क

अथ हैनमुद्गातोपससाद, "उद्गातर्या देवतोद्गीथमन्वायत्त विद्वानुद्गास्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत्; व देवते" ति ॥ ६ ॥

"आदित्य" इति होवाच, "सर्वाणि ह वा इमानि भूतान मुच्चैःसन्तं गायन्ति। सैषा देवतोद्गीथमन्वायत्ता। तां चेदविद्वानु मूर्धा ते व्यपतिष्यत् तथोक्तस्य मये" ति ॥ ७ ॥

अथ हैनं प्रतिहर्तोपससाद, "प्रतिहर्तर्या देवता प्रतिहारम तांश्चेदविद्वान् प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति मा भगवान कतमा सा देवते"ति ॥ ८ ॥

"अन्न" मिति होवाच, "सर्वाणि ह वा इमानि भूतान्यन्नमे हरमाणानि जीवन्ति। सैषा देवता प्रतिहारमन्वायत्ता। तां चे प्रत्यहरिष्यो मूर्धा ते व्यपतिष्यत् तथोक्तस्य मये" ति। त मयेति ॥ ९ ॥

इति प्रथमाध्याये एकादशः खण्डः

1. उद्गास्यः मा.

---

अथ हैनमुद्गाता — देवतेति। पूर्ववदर्थः। [1]आदित्यः। ऽध्यस्योपास्य आदित्य इत्यर्थः। सर्वाणि—गायन्ति। उच्चैस्सन्तं उच्चैः मधःस्थितानि सर्वाणीमानि भूतानि गायन्तीत्यर्थः। प्रस्तावप्राणयोः प्रश साम्यवत् उद्गीथोच्चैस्स्थितादित्ययोः उच्छब्दवत्त्वेन साम्यमिति भावः। शिष्टं प

अथ हैन प्रतिहर्ता—देवतेति पूर्ववत्। [2]अन्नमिति—प्रतिह अन्नमध्यस्योपास्यमित्यर्थः। सर्वाणि —। प्रतिहरमाणानि। भक्षयन्ती सन्तीति शेषः। अत्र प्रतिहरमाणानीति प्रतिशब्दवत्त्वेन अन्नप्रतिहारयोः प्रतिहारे अन्नाभिमानिदेवताध्यासः। ततश्च प्रस्तावोद्गीथप्रतिहारभक्तिषु प्राणादित्यान्नदृष्टिः कर्तव्येत्यर्थः। तथोक्तस्य मयेति तथोक्तस्य मयेति इ रुक्तिर्विद्यासमाप्त्यर्था। शिष्टं पूर्ववत्।

1, 2. इदमिदन्च वाक्यं न क. कोशे।

एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते—: समन्वयाध्याये प्रथमपादे
ग्र निखिल[1]भूतजातप्रवृत्तिहेतुत्वसंभवात् प्राणशब्देन मुख्यप्राण एवाभिधीयता'
र्वपक्षे प्राप्ते, शिलाकाष्ठाद्यचेतनस्वरूपस्य, शुद्धस्य जीवस्वरूपस्य च मुख्य-
ास्थितिकृत्वाभावात् प्रसिद्धवन्निर्दिष्टसकलचेतनो (चेतनाचेतनो ?) त्पत्तिलय-
परमात्मव्यतिरिक्ते असंभवात्, चेतनवाचिदेवताशब्दस्याप्यचेतने मुख्यप्राणे
व परमात्मैव प्राणयितृत्वादियोगवशेनाभिधीयते' इति "अत एव प्राणः"
ण सिद्धान्तितम् ।

ननु प्रस्तावोद्गीथप्रतिहारभक्त्यनुगतत्वेन देवतात्वेन च निर्दिष्टेषु प्राणादि-
ाणस्यैव परमात्मत्वम्, आदित्यान्नयोस्तु न तथात्वमित्यत्र किं विनिगम-
चेतनवाचिदेवताशब्दः त्रिष्वपि समानः । प्राणवाक्यशेषे प्रसिद्धप्राणासंभा-
ाचितसर्वभूतसंवेशनोद्गमनाधारत्वश्रवणवत्, आदित्यान्नवाक्यशेषयोरपि अ-
सर्वभूतगेयत्व - सर्वभूतोपजीव्यत्वयोः प्रसिद्धादित्यान्नासंभावितयोः श्रवणा-
। यदि च आदित्यवाक्ये सर्वभूतशब्दः आदित्यगानयोग्यचेतनविशेषपर-
न्नवाक्यशेषेऽपि[2] अन्नोपजीवनयोग्यचेतनविशेषपरतया संकोच्यते, देव-
ा, "अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्" इति सूत्रोक्तन्यायेनाभि-
ापरतया योज्यते —तर्हि प्राणेऽपि तथाऽस्तु; विशेषाभावादिति चेत् —
उच्यते । प्राणशब्दस्य, 'प्राणस्य प्राणम्', 'यदिदं किञ्च जगत् सर्वं
ति निःसृतम्' इत्यादिषु परमात्मन्यपि निरूढत्वात्, 'सर्वाणि ह वा
ूतानि' इत्यादिवाक्यशेषस्वारस्याच्च परमात्मपरत्वमाश्रितम् । अन्नादित्य-
तथात्वात् चेतनवाचिदेवताशब्दस्य केवलादित्यमण्डलान्नयोरभावात् तदभि-
ापरत्वम् । अन्नाभिमानिदेवतायाश्च भूतभक्ष्यत्वं तदधिष्ठेयान्नाभेदारोपेणो-
'सर्वाणि ह वा इमानि भूतानि आदित्यमुच्चैस्सन्तं गायन्ती' ति प्रति-
र्वभूतगेयत्वं परमात्मनोऽपि न संभवति । भूतशब्दो हि प्राणिनिकाये महा-

1. निखिलपदं ख. कोशे न । 2. ख. कोशे नात्र अपिशब्दः; किन्तु उपरि
च' इति चकारः ।

र्वाणि ह वा इमानि भूतानी' ति सर्वभूतग्रहणेन स्तवनस्यात्र तिसृष्वपि देवतात्व-
ाणमात्रस्य ब्रह्मत्वं सूत्रकृदभिमतं कथं युज्यत इत्याशङ्कते नन्विति ।

१—१२

**अथातः शौव उद्गीथः। तद्ध बको दाल्भ्यो ग्लावो वा स्वाध्यायमुद्वव्राज ॥ १ ॥**

**तस्मै श्वा श्वेतः प्रादुर्बभूव। तमन्ये श्वान उपसमेत्योचुः, 'उ**

---

भूतेषु च रूढः। महाभूतस्य गातृत्वप्रसक्तेरेवाभावात् प्राणिनिकायपरत्वं वक्त
तदपि न संभवति। न हि सर्वेऽपि प्राणिनः परमात्मानं गायन्ति; स्थावरेषु
दिषु चाभावात्। तस्माद् गानयोग्यप्राणिविशेषपरत्वेन संकोचः परमात्मपरत्वं
वश्यक इति आदित्यशब्दस्य लोकव्युत्पत्तिविरुद्धं[1] परमात्मपरत्वं नाश्रयणीयम्
मन्त्रवाक्यशेषेऽपि 'प्रतिहरमाणानि' इति भक्ष्यमाणत्वं न परमात्मनि मु
अत आदित्यान्नशब्दयोः ब्रह्मपरत्वाभावेऽपि प्राणशब्दस्य ब्रह्मपरत्वं सि
द्रष्टव्यम् ॥ प्रकृतमनुसरामः। १

अतीतखण्डे अन्नाप्राप्तिनिमित्ता उच्छिष्टपर्युषितभक्षणलक्षणा
स्थोक्ता। अनन्तरमन्नलाभाय श्वदृष्टः उद्गीथः प्रस्तूयते। **अथातश्शौव उद्**
**शौवः** श्वदृष्टः उद्गीथः। प्रस्तूयत इति शेषः। **शौव** इति टिलोपश्छान्दसः
— **वव्राज**। अत्र **वाशब्दश्चार्थे**। बकग्लावनामद्वययुक्तो दल्भसुतो मित्रा
स्वाध्यायं कर्तुमुद्वव्राज ग्रामान्निर्गतवानित्यर्थः।

**तस्मै — बभूव**। तत्स्वाध्यायेन तोषितः कश्चन ऋषिः श्वेत
रूपतया तस्मै प्रादुर्बभूवेत्यर्थः। **तं — ऊचुः**। **तं** श्वेतं श्वानं क्षुल्लकाः

1. विरुद्धपरत्वं ग.

---

**उच्छिष्टपर्युषितेति**। तथाच श्रीभाष्यम्—'इभ्योच्छिष्टभूतान् स्वोच्छिष्टभूतान
षितांश्चखाद' इति। **छान्दस इति**। शौवन इति वास्तवं रूपम्। **वाशब्दः चार्थे**
एकनाम्नाऽऽह्वानादिकाले नामान्तराप्रयोगात् एककालाप्रयोगरूपविरोधसूचनाय वाकारः प्र
तावता न नाम्नोर्भिन्ननिष्ठत्वम्। किन्तु एकस्मिन्नेव पुरुषे समुच्चय इति भावः। बकग्लाव
त्वे तु चकार एव श्रुतौ प्रयुक्तः स्यात्। न च प्रकृतोद्गज्यादिकर्तृत्वं बकस्य ग्लावस्य वेति
पुरुषेणानवधारितम्; येन वाकारोऽन्यथोपपद्येत। अत एव—'एकस्यैव नामद्वयं चेत्, बको
वा दाल्भ्य इति निर्दिश्येत। अतो दल्भसुतो बकः, अन्यस्तु मैत्रेयो ग्लावः' इति न शङ्
ग्लाव इति मित्राकृतं नाम, बक इति दल्भकृतमिति सूचनाय तथोक्तिः। ननु दाल्भ्यो
गोत्रापत्यमिति प्रागुक्तम्, न तु दल्भसुत इति। सत्यम्। स चिकितायनसुतः। अ

गायतु; अशनायाम वै' इति ॥ २ ॥

ान् होवाच, 'इहैव मा प्रातरुपसमीयाते' ति। तद्ध बको दाल्भ्यो
मैत्रेयः प्रतिपालयाञ्चकार ॥ ३ ॥

ह यथैवेदं बहिष्पवमानेन स्तोष्यमाणाः संरब्धाः सर्पन्तीत्येव-
। ते ह समुपविश्य हिंचक्रुः ॥ ४ ॥

---

उक्तवन्तः। उक्तिमेवाह — अन्नं — वा इति। वैशब्दोऽवधारणे।
नायाम बुभुक्षिताः स्मः। अस्माकं, गानेनान्नं भगवान् संपादयतु' इत्यू-
।

ान् — समीयातेति। श्वः प्रातःकाले अस्मिन्नेव देशे मा मामुप-
तान् क्षुल्लकान् शुनः श्वेतः श्वा उवाचेत्यर्थः। तद्ध — चकार। बकग्लाव-
ः तत्संवादं श्रुत्वा श्वेतस्याप्यागमनं प्रतीक्ष्य स्थितवानित्यर्थः।

— आससृपुः। ते श्वेतश्वादयः तत्रैव प्रातरागत्य, बहिष्पवमानेन
ोष्यमाणा उद्गातृपुरुषाः अन्योन्यस्पृष्टा गच्छन्तीत्येतद् यथा, [1]तथैव अ-
च्छं मुखेन गृहीत्वा आससृपुः उपसर्पणं कृतवन्तः। ते ह समुपविश्य
अथ ते उपविश्य हिंचक्रुः हिङ्कारं कृतवन्त इत्यर्थः।

१था — एवं क.

---

ासुतः, पित्रन्तरानिर्देशात्। अस्तु वा दल्भस्य गोत्रापत्यं पौत्रादिरूप एवायम्;
रलब्धप्रमाणानामर्थविशेषाग्रहेण। श्वान इति। इमेऽपि ऋषय इति मन्तव्यम्;
हारहिंकरणाद्ययोगात्। उपसमीयतेति पाठोऽशुद्धः। उपसमीयातेति निर्विवाद-
। विधिलिङि समियातेति, आशीर्लिङि, 'एतेर्लिङि' इति सूत्रात् समियास्तेति च
' इति दैर्घ्यं परं छान्दसम्। ईधातुर्वाऽस्त्विह प्रश्लेषलब्धः।

ः उद्गाता प्रस्तोता प्रतिहर्ता च। यद्यपि बहिष्पवमानस्तोत्रार्थं हविर्धानात् बहिष्पव-
प्रसर्पणे एतावतामन्वारम्भः श्रुतः, 'अध्वर्युं प्रस्तोता संतनुयात्, प्रस्तोतारमुद्गाता,
हर्ता, प्रतिहर्तारं ब्रह्मा, ब्रह्माणं यजमानः, यजमानं प्रशास्ता' इति — अथापि
इति पदेन एषामेव ग्रहणमिति एवमुक्तम्। अत एव एषामपच्छेद एव प्रायश्चित्ता-
अपच्छेदाधिकरणे (पू. मी. ६—५.) द्रष्टव्यम्। रलयोरभेदात् संरम्भः संलम्भः
पर्शविशेषः।

ओ३ मदा३ मो३पिबा३ मो३ देवो वरुणः प्रजापतिः ऽन्नमिहा२ हरदन्नपते२ ऽन्नमिहाहरा२ हरो३ मिति ॥ ५ ॥

इति प्रथमाध्याये द्वादशः खण्डः

---

अयं वाव लोको हाउ[1]कारो वायुर्हाइ[2]कारश्चन्द्रमाअथकार

1. हाबु. 2 हायि.

---

[ हिं[1]ङ्कारमेवाह – ] ओमदामों—आहरत् । [ ओ[2]मिति गा
अदाम भक्षयेम, पिबाम च ] द्योतमानत्वाद् देवः । म्रियमाणत्वात् (
वरुणः । प्रजानां पालनात् प्रजापतिः । एवम्भूतः सविता अन्नमाहरतु
अन्नपते — ओमिति । अन्नपते इति आदित्यस्य संबोधनम् [ [3]आ
द्विरुक्तिः प्रार्थनायाम् ] इति गीतवन्त इत्यर्थः । [ 'अन्नपत' इतिमन्त्रकरण
ध्यासविशिष्टोद्गीथोपासनमन्नफलकमिति भावः[4] ] ॥

सामावयवान्तर्गत (न्तर[5]) स्तोभाक्षरविषयाणि उपासनान्तराणि उपदि
अयं — हाउकारः । हाउ इत्येवंलक्षणो यः सामसु स्तोभः, सः अ
एतल्लोकत्वेनोपास्य इत्यर्थः । एवमुत्तरत्रापि स्तोभशब्दोऽध्याहर्तव्यः । अ

1, 2, 3, 4. इमानि कुण्डलितानि न क. कोशे । 2. एतत्स्थाने पिबाम
भवेमेत्यर्थ इति क. घ. कोशे ऽशुद्धम् । 5 अन्तर क. घ. शाङ्करानुसारि ।
स्तोभ इत्यत्र स इति क.

---

अन्नपत इतिमन्त्रकरणेत्यादि वाक्यं केषुचित् कोशेषु नास्ति । अत्र श्रुति
आनन्दगिरीयाच्च ओमदामेत्यारभ्य कृत्स्नमिदं हिङ्काररूपं प्रतीयते । शाङ्करे, 'एवं
पुनरप्यूचु' रिति अन्नपत इत्यादिभागस्यावतारणात् भागोऽयं न हिङ्कार इति लक्ष
सर्वथा पूर्वमसंबोधनेन उक्तम् । इह संबोधनपूर्वमिति वैलक्षण्यं किञ्चिदस्ति । तदयं पू
इति स्यादाशयः । एवमत्र प्रकरणे पूर्वं सामभक्तिषूद्गीथादिषु अन्यदृष्टिविधेरेवोपदिष्ट
दपि सामभक्त्यन्तर्गतस्तोभाक्षरेषु, ततः समस्ते च साम्नि नानादृष्टीनामेवोपदेशात्
खण्डः कर्माङ्गभूतसामांशे दृष्टिविधितत्परो युक्तः, न तु स्वतन्त्रशौवनोद्गानपरः । तत्र
उद्गीथ इत्युपक्रमात् उद्गीथे शौवनदृष्टिः । तत्रापि निकृष्टे उत्कृष्टदृष्टेरेव युक्तत्वात् प्रकृत
प्रकाशितादित्यरूपदेवतादृष्टिः कर्माङ्गभूतोद्गीथे विवक्षितुमुचितेत्याशयः पाठसत्त्वपक्षे

स्तोभेति । स्तोभो नाम निरर्थकः ऋगनन्तर्गतः तत्तत्सामगानकाले तत्रतत्र

रीकारः ॥ १ ॥ आदित्य ऊकारो निहव एकारो विश्वे देवा औ-
: प्रजापतिर्हिंङ्कारः प्राणःस्वरोऽन्नं [2]या (याया) वाग्विराट् ॥ २ ॥
स्त्रयोदशः स्तोभः सञ्चरो [3]हुङ्कारः ॥ ३ ॥
ुग्धेऽस्मै वाग् दोहं यो वाचो दोहः; अन्नवानन्नादो भवति, य
साम्नामुपनिषदं वेद उपनिषदं वेदेति ॥ ४ ॥

इति प्रथमाध्याये त्रयोदशः खण्डः

इति छान्दोग्योपनिषदि प्रथमोऽध्यायः

औहोयि. 2. याया. मा. 3. हुप्कारः मा.

न्ने प्रसिद्धः । वायुर्हाइकारः । हाइ इति स्तोभो वामदेव्यसाम्नि प्रसिद्धः ।
। शिष्टं स्पष्टम् । निहवः आह्वानमित्यर्थः । 'ह्वः संप्रसारणञ्च न्यभ्युप-
। भावे ह्वेञः अप्संप्रसारणयोः निहव इति रूपम् । प्राणः स्वरः । स्वर
: प्राण इत्यर्थः । अन्नं या (याया)[1] । या (याया) इति स्तोभोऽन्न-
वाग् विराट् । वागिति स्तोभो विराट् अन्नमित्यर्थः। विराट्पुरुषो
नेरुक्तस्त्रयोदशः स्तोभः सञ्चरो हुङ्कारः । हाउकारादिभ्यो द्वाद-
क्तिभ्योऽधिकः हुमिति त्रयोदशो यः स्तोभः, स इदमितिनिर्वक्तुमशक्य-
रुक्तत्वात् सञ्चरः डोलायितः=संदेहरूप इत्यर्थः । ततश्च तत्र सञ्चरत्वदृष्टिः
। ततश्च हाउकारादिषु त्रयोदशसु उक्तपृथिवीलोकादिदृष्टिः कर्तव्येति स्थितम् ।
स्य फलमाह—दुग्धे—भवति । उक्तोऽर्थः । यः—वेद । सामाव-
ारोपासनां यो वेदेत्यर्थः । द्विरुक्तिरध्यायसमाप्त्यर्था ॥ १–१३.

इति प्रथमोऽध्यायः (प्रथमः प्रपाठकः)

ग्राया इति क. घ.

ानिरुक्त इति । अव्यक्ताक्षरगानमनिरुक्तगानमित्युच्यते । तथा गानात् हुमः
ाम् । शाखाभेदेन हुम् हुप् इत्यव्यवस्थादर्शनाच्चास्माभिः किञ्चिद्रूपेणानध्यवसितत्वात्
।
ुक्तिरध्यायसमाप्त्यर्थेत्येव सर्वत्र । अतः प्रपाठकस्याध्यायत्वेनैव शाङ्कर इवात्रापि
हारः । प्रपाठकव्यवहारोऽपि प्राचीनः अधिकरणरत्नमालासंदर्भेऽप्यस्ताव्यकारि ।

अथ द्वितीयोऽध्यायः २-१.

ओम् । समस्तस्य खलु साम्न उपासनम् , साधु । यत् खलु तत् सामेत्याचक्षते । यदसाधु, तदसामेति ॥ १ ॥

तदुताप्याहुः, 'साम्नैनमुपागादिति, साधुनैनमुपागादित्येव हुः । असाम्नैनमुपागादिति, असाधुनैनमुपागादित्येव तदाहुः' ॥

अथोताप्याहुः, साम नो बतेति, यत् साधु भवति । साधु इ तदाहुः । असाम नो बतेति, यदसाधु भवति । असाधु बतेत्येव तदाहुः

---

सामावयवोपासनं प्राङ् निर्दिश्य समस्तस्य साम्न उपासनं प्रस्तौति स्तस्य — साधु । समस्तस्य पाञ्चविध्ययुक्तस्य साप्तविध्ययुक्तस्य वा स साम्नः साधुत्वेनोपासनं कार्यमित्यर्थः । तत्रोपपत्तिमाह — यत् — असा साध्वसाधुकर्मणी सामासामत्वेन व्यवहरन्तीत्यर्थः । तदुताप्याहुः । तत् विषये अन्यदप्याहुः । किं तदित्यत्राह साम्ना — तदाहुः । सामासामोपा मागतं प्रत्यर्थिनं साध्वसाधुभ्यामागतं व्यवहरन्तीत्यर्थः । अथोताप्याहुः । [[1]अ वार्थे जना अन्यदप्याहुरित्यर्थः । ] साम नो बतेति यत् साधु भवति कर्म साधु भवति, तत् नः अस्माकं साम बतेति सानुमोदाः प्रवदन्ति लो साधु—तदाहुः । साम नो बतेत्युक्त एव विषये, साधु बतेति लोकाः प्रवद ततः सामसाधुशब्दौ एकत्र प्रयुज्यमानौ दृश्येते इत्यर्थः । एवमुत्तरत्रापि । सामसाधुशब्दयोरेकार्थे (र्थ) प्रयोगात् समस्तस्य साम्नः साधुत्वेनोपासनं क मित्यर्थः ।

1. इदं वाक्यं न क. ग. कोशयोः

---

**समस्तस्य** । न पूर्ववत् उद्गीथादेः सामैकदेशस्य, नापि उत्तरत्र कृत्स्नस अवान्तरसर्वविधारूपेण गृहीतस्य ; किन्तु सामान्यतस्सामपदेन गृहीतस्येत्यर्थः । समस्तस्य उपासनं यत् उपदिश्यमानम्, तस्याऽऽकारमाह **साध्विति** । इदं 'साधु सामेत्युपास्ते' निगमने स्पष्टम् । साधुत्वमुपासनविशेषणं चेत्, अव्यावर्तकं व्यर्थं स्यात् । सान्त्ववच गतसाधुत्वस्य गीतिरूपसाम्न्यारोपेणोपासनमिदम् । तदुतेत्यादिवाक्ये, साम्नैनमुपाग यत्, तत् साधुनैनमुपागादिति वाक्येनाहुरित्युक्त्या यत् साम तत् साधु इति ज्ञापितम् । यत् साधु तत् सामेति प्रथमवाक्योदितमपि संप्रतिपन्नमिति दर्शयितुम् **अथोतेति** वाक्यम्

स य एतदेवं विद्वान् साधु सामेत्युपास्ते, अभ्याशो ह यदेनँ धर्मा आगच्छेयुः, उप च नमेयुः ॥ ४ ॥

इति द्वितीयाध्याये प्रथमः खण्डः

२-२.

**लोकेषु पञ्चविधँ सामोपासीत**

स य—**नमेयुः** । एवं साधुत्वेन समस्तसामोपासकं[1] ह प्रसिद्धं **अभ्याशः** ाधुधर्माः सर्वे आगच्छेयुश्च, भोग्यत्वेनोपनताश्च भवेयुरित्यर्थः । 'रमणीय-ाभ्याशो ह' इत्यत्र **अभ्याशः** अभ्यागन्तार इति व्यासार्यैर्व्याख्यातत्वात् **अभ्याशः** आगन्तारः साधवो धर्माः = अभ्यागमनयोग्याः साधवो धर्माः अ-ग्युरिति वाऽर्थः । **उपनमेयुश्च** । भोग्यतां भजेयुरित्यर्थः । २-१.

**लोकेषु पञ्चविधं सामोपासीत** । हिङ्कारप्रस्तावोद्गीथप्रतिहारनिधनलक्षण-य[2]युक्तं ऋत्वङ्गभूतं साम **उपासीत** । पञ्चविधसामकर्मकमुपासनं **लोकेषु**

. समस्तं सामोपासीनस्य क. 2. पञ्चविधा क. (उपरि सप्तविधेति प्रयोक्ष्यते ।)

े तत् खलु 'साम नो बते'ति वाक्येनाहुः । तेन 'साधु नो बते'त्येवोक्तं भवति । साम क्तमेव साधु नो बतेति कदाचिद् विश्रूयते च । तस्मात् साधुसाम्नोरैक्यमिति भावः । ं सामेतिव्यवहार आदित्यदृष्टौ दर्शयिष्यते । शीक्षाध्याये च, 'साम संतान' इत्यत्र सामे-त्यर्थं वर्णयन्ति । यत् समं कर्म स्वात्मनः परेषाञ्च, तत् साध्वेव भवति । अतः साधु- । **बतेति** पूर्वत्रानुमोदे; परत्र खेदे । **अभ्यागन्तार** इति । प्रथमतृतीयखण्डे, ो ह यदस्मै स काम' इत्यत्र एतद्बहुवचनान्तव्याख्यानरीत्यसंभवात् तत्रेदं न ।

ः परं सामान्यत एव साम्नि पञ्चविधाग्रहणेन षड् दृष्टिप्रकाराः, सप्तविधाग्रहणेन च प्रकाराः । ततः गायत्र्यादिसामविशेषेषु पञ्चविधाग्रहणेन एकादश दृष्टिप्रकाराश्चोपदि-अथ गानस्वरे हेयोपादेयविवेकः । अथ ओमित्येतदक्षरमित्युपक्रान्तस्य प्रणवस्य े विनियोगरूपः प्रधानार्थः । अथ यजमानविशेषस्य कर्मणि प्रतिसवनं गेयसामभेदोप-द्वितीयप्रपाठके ।

क्तस्य साधुत्वोपासनस्य लोकादिवक्ष्यमाणसर्वोपासनैः समुच्चय इष्टः शाङ्करे । अत्र तु प्रकरणादिवशात् स नादृत इति प्रतीयते । ननु लोकेष्विति सप्तमीबलात् उपासनस्य

**पृथिवी हिङ्कारोऽग्निःप्रस्तावोऽन्तरिक्षमुद्गीथ आदित्यः द्यौर्निधनमित्यूर्ध्वेषु ॥ १ ॥ अथाऽऽवृत्तेषु—द्यौर्हिङ्कार आदित्य वोऽन्तरिक्षमुद्गीथोऽग्निः प्रतिहारः पृथिवी निधनम् ॥ २ ॥**

**कल्पन्ते हास्मै लोका ऊर्ध्वाश्चाऽऽवृत्ताश्च, य एतदेवं लोकेषु पञ्चविधँ सामोपास्ते ॥ ३ ॥** इति द्वितीयाध्याये द्वितीयः

---

लोकविषयं कुर्यादित्यर्थः । ' आदित्यादिमतयश्चाङ्ग उपपत्तेः ' इत्यधिकरणे नङ्गसमभिव्याहार'युक्तेषूपासनेषु[1] अनङ्गदृष्टिरूपत्वस्य समर्थितत्वात् अङ्गभ अनङ्गभूत[2]लोकदृष्टिः कर्तव्येत्यर्थः । तत्प्रकारमेव दर्शयति **पृथिवी—इ** हिङ्कारप्रस्तावोद्गीथप्रतिहारनिधनेषु क्रमेण पृथिव्यग्न्यन्तरिक्षादित्यद्युलोकदृष्टि क्रमेण कर्तव्येत्यर्थः । तथा, **अथावृत्तेषु—निधनम्** । आवृत्तक्रमेण द्युलोकादित्यान्तरिक्षाग्निपृथिवीदृष्टिः कर्तव्येत्यर्थः ।

तत्फलमाह **कल्पन्ते—उपास्ते** । **अस्मै** अस्य **लोकाः** कल्पन्ते सक्भोगनिष्पादनसमर्था भवन्तीत्यर्थः ।

---

1. युक्तोपासनेषु ख. 2. भूतपदं क. कोशे ।

---

लोकविशेष्यकत्वं तत्र सामदृष्टिश्च प्रतीयते । तत् कथमन्यथा व्याख्यायते । तत्राऽऽह त्यादीति । तर्हि कथं सप्तमी ? अत्र शाङ्करम्—सप्तम्याः प्रथमात्वेन विपरिणामः । इ श्चाध्याहार्यः । 'लोकाः पञ्चविधं साम'इत्युपासीतेति । व्यत्यासो वा—सप्तम्याः सामपदे, द तीयायाश्च लोकपदे इति । श्रुतिहृदयं तु, 'नात्र सामान्यतः साम्नो लोकत्वेनोपासनं दस्ति । किन्तु लोकेष्वेकैकलोकदृष्ट्या पञ्चविधसामान्तर्गतैकैकविधां परमुपासीतेति । प नायैव सप्तमी । एवमुपरि सर्वत्र, 'वाचि सप्तविधं सामे'तिवाक्यं यावत् । यत्र तु विशेषदृष्टिवत् सामान्ये सामान्यदृष्टिरपि विवक्षिता, तत्र सप्तमीं त्यजति श्रुतिः । यथ न्तरमेव, 'अथ खल्वमुमादित्यं सप्तविधं सामोपासीते'ति । तत्र प्रथमोदितादिविशे आदित्यत्वाकारेण तद्दृष्टेः सामत्वेन साम्नि विवक्षेति । एवं लोकादिषु कतिपयलोकादिमाः वोच्यत इति ज्ञापनार्थश्च सप्तमी । अस्तु वा सप्तम्याः पञ्चविधमित्यत्रान्वयः । पञ्चवि लोकगतपञ्चविधायुक्ततयोपासीत । एतद्विधासु तद्विधात्वारोपे तद्विधायुक्तत्वमेतस्य भवतीति ।

**ऊर्ध्वेषु, आवृत्तेषु** इत्युभयत्र लोकेषु पञ्चविधं सामोपासीतेत्यनुकृष्यते । **आ** यथागतमागतत्वम् ।

२—३.

वृष्टौ पञ्चविधँ सामोपासीत —पुरोवातो हिङ्कारो मेघो जायते स
ो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहार उद्गृह्णाति
नम् ॥ १ ॥

वर्षति हास्मै, वर्षयति ह, य एतदेवं विद्वान् वृष्टौ पञ्चविधँ
ास्ते । इति द्वितीयध्याये तृतीयः खण्डः

---

वृष्टौ—उपासीत । पूर्ववदेव अत्र पञ्चविधे साम्नि वृष्टिदृष्टिः कर्तव्ये-
। पुरोवातः—उद्गृह्णाति तन्निधनम् । उद्ग्रहणं जलस्योद्ग्रहणं वर्ष-
: । शिष्टं स्पष्टम् ।

वर्षति हास्मै । इच्छत इति शेषः । अस्येच्छायां सत्यां वर्षतीति यावत् ।
ते—उपास्ते । अद्यापि य एवमुपास्ते, स इच्छायां सत्यां [ [1]यजमानाय ]
ते वर्षं कारयतीत्यर्थः । २—३.

1. यजमानायेति क.

---

पुरोवातादीनां क्रमभावित्वात्, हिङ्कारादिषु क्रमेण तद्दृष्टिः । एवं पूर्वोत्तरपर्यायेष्वपि
भाव्यम् । अधिकक्लेशेन तत्रतत्र तत्तद्दृष्टौ नियामकस्य लौकिकस्यान्वेषणमनावश्यकम् ।
स्थितत्वाच्च ।

विद्योतत इति । घनीभूतात् मेघात् वर्षे भूरिनिवृत्ते वायुना वेगेन मिथःसंघर्षं प्रापितयो-
र्वैद्युतस्तयित्नुसमुद्भव इति वर्षानन्तरं तत्कथनम् । एवं प्रतिहरणमभिमुख्येन हरणम् -
घो मेघान्तराभिमुख्येन ह्रियते । स प्रतिहन्यते, तदा विद्युदादि । अतः प्रतिहारो विद्यु-
ति । इच्छत इति शेष इति । ननु सर्वत्र फलं तत्कामनयाऽनुष्ठान एवेति किमर्थमिहै-
रणम् । न च, उपासनात् पूर्वं फलकामनापूर्वकसंकल्पाभावेऽपि एतदुपासको यदा कदापी-
चेत् — तदापि वर्षतीत्यत्र किञ्चिन्मानमस्ति । अत एव वर्षोत्पादनशक्तिसंपत्तिरेव एतद्वि-
मेत्यत्र मानाभावात् शेषपूरणमयुक्तमिति चेत्—उच्यते । 'वर्षति हास्मै, य एतदेव'
वति अनुपरम्य, 'वर्षयति ह' इत्यधिकवचनात्, पश्चात् इच्छन्नपि जनयतीति स्वीका-
तत्र वर्षयति चेति चकाराश्रवणात् वर्षति हास्मै इत्यस्य विवरणरूपमेव वर्षयति
यथा उपरि, 'एकविंशत्या आदित्य 'मित्यस्यैव विवरणम 'आप्नोति हादित्यस्ये' तीति
कम ; तद्वदित्याशयः । शाङ्करे अत्र 'इच्छत' इति पूरितम् । अत्र इच्छत इत्येव पाठात्
न्तमिदम् ।

२–४.

सर्वास्वप्सु पञ्चविधँ सामोपासीत—मेघो यत् संप्लवते स [
यद्वर्षति स प्रस्तावो याः प्राच्यः स्यन्दन्ते स उद्गीथो याः प्रती
प्रतिहारः समुद्रो निधनम् ॥ १ ॥

न हाप्सु प्रैति । अप्सुमान् भवति, य एतदेवं विद्वान् सर्व
पञ्चविधँ सामोपास्ते ॥ २ ॥ इति द्वितीयाध्याये चतुर्थः खण्डः

२–५.

ऋतुषु पञ्चविधँ सामोपासीत—वसन्तो हिङ्कारो ग्रीष्मः प्र
वर्षा उद्गीथः शरत् प्रतिहारो हेमन्तो निधनम् ॥ १ ॥

कल्पन्ते हास्मा ऋतवः; ऋतुमान् भवति, य एतदेवं वि
ऋतुषु पञ्चविधँ सामोपास्ते ॥ २ ॥ इति द्वितीयाध्याये पञ्चमः खण्डः

---

सर्वासु—उपासीत । पूर्ववदर्थः । मेघो—हिङ्कारः । संप्लवनं सं
याः प्राच्यः [ स्य[1]न्दन्ते स उद्गीथः । स्यन्दन्ते ] । आप इति शेषः ।
प्रतीच्यः स प्रतिहारः । प्रतीच्यः स्यन्दन्ते । आप इति शेषः । शिष्टं स्प
न हाप्सु प्रैति । न प्रैति = न म्रियत इत्यर्थः । अप्सुमान् भवति । [ प्रभूतं
संपन्नो भवतीत्यर्थः ] ' अपोयोनियन्मतुषु[4] ' इति अलुक् । शिष्टं स्पष्टम् । २

ऋतुषु— । स्पष्टम् । कल्पन्ते— । उपासकस्य भोग्यनिष्पाद
र्था भवन्तीत्यर्थः । ऋतुमान् भवति । वसन्ताद्युतुफलभोगशाली भवतीत्य
शिष्टं स्पष्टम् । २

1, 2. कुण्डलितं क. ग. कोशयोः न. 3. कुण्डलितं क. कोशे न. 4. यन्मयेषु

---

सर्वास्विति । पूर्वोक्तवृष्टितदन्योभयरूपास्वित्यर्थः । प्रतीच्यो नद्यो नर्मदाद्याः प्रा
प्रतिशब्दवत्तदबोध्यत्वसामान्यात् । एवञ्च प्राच्यो गङ्गाद्याः उद्गीथः । आसामुद्गीथवत् उ
त्वाच्च । एवं वर्षर्तुपर्यन्तं प्रतीचीतो वर्षवातप्रसरात् प्राच्यो नद्यः पूर्वं स्यन्दन्ते । अथ शीत
प्राचीतो वातागम इति तदातनवर्षात् प्रतीच्यः इति क्रमोऽप्यस्ति ।

हेमन्त इति हेमन्तशिशिरयोरेकीकरणम् । अस्तु वा हेमन्तमात्रम् । ऋतुमान् भव
अतिशायने मतुप् । एतदुपासकविषये ऋतुफलस्य प्रतिबन्धो न्यूनता वा न भवति ; ।
अतिशय इति ।

२--६.

शुषु पञ्चविधँ सामोपासीत--अजा हिङ्कारोऽवयः प्रस्तावो गाव
श्वाः प्रतिहारः पुरुषो निधनम् ॥ १ ॥
भवन्ति हास्य पशवः, पशुमान् भवति, य एतदेवं विद्वान् पशुषु
सामोपास्ते ॥ २ ॥ इति द्वितीयाध्याये षष्ठः खण्डः

२--७.

ाणेषु पञ्चविधं परोवरीयः सामोपासीत--प्राणो हिङ्कारो वाक्

---

शुषु-- । स्पष्टम् । [ भवन्ति हास्य पशवः । अस्योपासकस्य भोग-
ना भवन्तीत्यर्थः । ] पशुमान् भवति । प्रभूतपशुमान् भवतीत्यर्थः ।
क इति शेषः । [ शिष्टं स्पष्टम् ] २--६.
ाणेषु-- । वरीयस्त्वं ज्येष्ठत्वम् ; परस्त्वम् श्रेष्ठत्वम् । परस्त्वे सति
परोवरीयस्त्वम् । [परश्शब्दः सान्तः । ] परोवरीयस्त्वगुणकप्राणदृष्ट्या
ामोपासनं कर्तव्यमित्यर्थः । [ तदेवाह ] प्राणो--एतानि । एतानि

कुण्डलितं क. कोशादौ न ।

---

यादिपशूनामुपर्युपरि कथनं तेषामुपर्युपरि स्थितत्वात् उत्कृष्टत्वात् । अजापेक्षया अवी-
कम्बलाद्युपयोग्यूर्णाशालितयाऽतिशयात् । 'अपशवो वा अन्ये गोअश्वेभ्यः' इति
रत्र प्राशस्त्यम् । ेऽश्वस्य बलवेगादिकृतोऽधिक उपयोग. । उत्तरोत्तरस्य उपर्युपरि
पुरुष इति । अपशोरपि पुरुषस्यात्र घटने 'पुरुषाश्रयत्वात् पशूना'मिति शाङ्करे ।
ुरुषं पशु'मिति केचिदुदाहरन्ति । अत्र पुरुषपदं 'राजपुरुषः' 'चत्वार ऋत्विज-
इत्यादाविव पशुप्रायभृत्यादिपरं स्यात् । 'यथा ह वै पशव एवं स देवानाम्' इति च
ं पुरुषं श्रुतिराह । अतो मुख्यगौणसाधारणमिह पशुत्वम् ।
गो घ्राणमिति शाङ्करम् । अत्र तथाऽनुक्तिः प्रसिद्धमुख्यप्राणोऽपि गृह्येतेत्याशयेन ।
श्वतिप्रवृत्तिकत्वादन्येषामपि प्राणत्वम् । 'तद्वा एतन्मिथुनं यद् वाक् च प्राणश्च' इति
संपृक्तौ । तत्र प्राणबलप्राप्त्यनन्तरं वाग् व्यवहर्तुं क्षमते । तथापि बोधकव्यवहार-
दनात् प्राणस्योपरि वाक् । वाग्व्यवहारस्य दृष्टार्थविषयकत्वात् वाचोऽपि प्राक् अर्थबुद्धिकरं
केसंपन्नं चक्षुः । अदृष्टेऽप्यर्थे शब्दश्रवणेन बुद्धिकरं श्रोत्रं ततोऽधिकं वागुप-
न मनस उपरि किञ्चित् बुद्धिकरमस्ति । ततस्तत् निधनमिति । एषां मुख्यप्राणादीनां
सर्वत्रोपनिषदि श्रेष्ठतया परिगणनमिति केनोपनिषदारम्भेऽपि दर्शितम् । अत

प्रस्तावः चक्षुरुद्गीथः श्रोत्रं प्रतिहारो मनो निधनं परोवरीयाँसि वा एत
परोवरीयो हास्य भवति; परोवरीयसो ह लोकान् जय
एतदेवं विद्वान् प्राणेषु पञ्चविधं परोवरीयः सामोपास्ते ।

इति तु पञ्चविधस्य ॥ २ ॥ इति द्वितीयाध्याये सप्तम

---

२—८.

अथ सप्तविधस्य—

वाचि सप्तविधँ सामोपासीत— यत् किञ्च वाचो 'हुँ[1]
हिङ्कारो यत् प्रेति स प्रस्तावो यदेति स आदिः ॥ १ ॥ यदुदि

1. हुमि. शां. भा.

---

प्राणादीनि परोवरीयांसि [ परोवरीयस्त्वगुणकानीत्यर्थः ]। परो—भवति
सकस्य[1] जीवनं श्रेष्ठं भवतीत्यर्थः ।

इति तु पञ्चविधस्य । [2]अनेन प्रकारेण पञ्चविधस्य साम्न उपास
भवतीत्यर्थः । [3]

अथ सप्तविधस्य । सप्तविधस्य उपासनं प्रस्तूयत इत्यर्थः ।
वाचि—हिङ्कारप्रस्तावोङ्कारोद्गीथप्रतिहारोपद्रवनिधनाख्यसप्तविधायुक्ते साम्नि वक्ष्य
प्रकारेण वाक्छब्दितशब्ददृष्टिः कर्तव्येत्यर्थः । यत्किञ्च—हिङ्कारः । लोके[4]

1. उपासकस्याय ख. 2. अनेन प्रकारेण पञ्चविधस्येतीदं क. कोशे । 3.
' शिष्टं स्पष्टमिति ख. 4. लोके इति क.

---

एवात्र परोवरीयस्त्वमुक्तम् । परत्वे सति वरीयस्त्वमिति तत्पदव्याख्यानमत्र भाष्ये । इदमु
प्राणनिष्ठम् । परं परं वरीय इति उत्तरोत्तरवरीयस्त्वं शाङ्करोक्तम् । तत् प्रथमप्राणे दुर्व
उत्तरत्वाभावात् ।

एवं लोकादिप्राणान्तदृष्टिषूपदिष्टासु उपदेशक्रमे नियामकमेवं पञ्चपर्यन्ते
पादि शाङ्करे—' लोकस्थितेर्वृष्टिनिमित्तत्वात्, वृष्टिपूर्वकत्वात् अपाम्, तन्निमित्तत्वात् ऋतु
स्थायाः, तस्यां सत्यामेव कालस्य पशव्यत्वा ' दिति । एतावत्संपन्न एव मुमुक्षुः प्राणा
पञ्चभिरुपदिष्टैः सर्वं लोकं जयेदिति प्राणस्तदनन्तरमुक्तः । पूर्वं लोकदृष्टावेव ' कल्पन्ते
लोकाः ' इत्युक्तम् । प्राणदृष्टावत्र को विशेष इति चेत्—अस्त्वविशेष एव, ततः किम् ?
सनानां पृथक्त्वेन समुच्चयाभावात् । अत्र लोकानां, ' परोवरीयस ' इति विशेषणात् अत्र फ

त् प्रतीति स प्रतिहारो यदुपेति स उपद्रवो यन्नीति तन्निधनम्॥ २॥
ुग्धेऽस्मै वाग् दोहं यो वाचो दोहः, अन्नवानन्नादो भवति, य
वेद्वान् वाचि सप्तविधं सामोपास्ते ॥ ३ ॥

इति द्वितीयाध्याये अष्टमः खण्डः

---

अवयवभूतो हिमिति यः शब्दः, स हिङ्कारः। हिङ्कारस्य हिंशब्दवत्त्वसादृ-
ततश्च हिंकारे, लोके हिंशब्दा यावन्तः तद्बुद्धिः कर्तव्येत्यर्थः । एव-
। **यत् प्रेति स प्रस्तावः** । प्रस्तावे सर्वप्रशब्दत्वबुद्धिः कर्तव्या।
**आदिः**। उद्गीथस्य[1] आद्यवयवभूते ओङ्कारे 'आ'[2] इति शब्दबुद्धिः
ः। **यदुदिति—निधनम्**। स्पष्टम्।
[उपासनाफलमाह] **दुग्धे—भवति**। वाक्संबन्धी यो दोहोऽस्ति, वाक्साध्यं
([3] तत् फलमुपास्यमाना वाक् **अस्मै** उपासकाय **दुग्धे** प्रयच्छति[4]। २–८.

उद्गीथेऽपि. ग. 2. 'आ' इति घ. पाठः; अन्यत्र 'अ'। 3.4. इत्यर्थः. ख.

---

क्ष्यते। एवं **परोवरीयो हास्य भवती**त्यत्र जीवनमित्यध्याहृतं शाङ्करानुसारेण।
ाय इति तद्गुणकप्राणकथनात् पशुमान् भवतीत्यादिवत् परोवरीयस्त्वगुणविशिष्टमुमु-
ऽकलपञ्चविधप्राणवान् भवतीत्यप्यभिमतं स्यादिति भवति लोकदृष्टिफलापेक्षयाऽत्र
ाषः॥

–३; १–१३.) वाग्दोहाद्यर्थमुपासनद्वयं प्रागुक्तम्। पुनरत्राप्युपासनान्तरं तदर्थ-
युवा स्यात् साधु युवाध्यायकः, आशिष्ठो दृढिष्ठो बलिष्ठः' इतीदमेव हि मुख्यं
ुम्।

पञ्चधा विभक्ते साम्नि उद्गीथभक्तौ निधनभक्तौ च। अवान्तरांशद्वयकरणेन सप्त-

हिङ्कारप्रस्तावोद्गीथप्रतिहारनिधनतः साम।
पञ्चविधं सप्तविधे तृतीय आदिर्भुपद्रव उपान्त्यः॥

ीथस्य नियमेन ओङ्कारादित्वात् **आदि**रिति ओङ्कार उच्यते। तस्य सर्वादि-
ोक्तात्। हिङ्कारादिपदवाच्याः याः सामभक्तयः तत्र तद्वाचकशब्दाद्यभागजातीय-
ाक्षरदृष्टिर्विधीयते। शाङ्करे तु 'हिमिति' इत्यत्र 'हुमिति' पाठ आदृतः हुकार-
हिङ्कारे तद्दृष्टिरिति।

२—९.

**अथ खल्वमुमादित्यँ सप्तविधँ सामोपासीत—सर्वदा सम साम ; मां प्रति मां प्रतीति सर्वेण समः, तेन साम ॥ १ ॥**

**तस्मिन्निमानि सर्वाणि भूतान्यन्वायत्तानीति विद्यात् ।**

**तस्य यत् पुरोदयात्, स हिङ्कारः । तदस्य पशवोऽन्वाय तस्मात्ते हिङ्कुर्वन्ति ; हिङ्कारभाजिनो ह्येतस्य साम्नः ॥ २ ॥**

---

**अथ खलु—** । सप्तविधे साम्नि आदित्यबुद्धिः कर्तव्येत्यर्थः । दित्ययोरैक्याध्यासहेतुमाह **सर्वदा समः तेन साम** । आदित्यस्य सर्वदा माणत्वेन समत्वात् सामत्वमित्यर्थः । **मां-साम** । लोके हि, 'आदित्यो मां प्र अभिमुखः, मां प्रति सम'इति प्रतीयते । पुरुषविशेषं प्रति आभिमुख्यस्य पुरु प्रति अनाभिमुख्यस्य [1]चाभावात् । अतः सर्वं प्रति समत्वादपि सामत्वमित्यः

**तस्मिन्—विद्यात् । तस्मिन्** आदित्ये[2] । सर्वभूतोपजीव्यतया उ मुपासीतेत्यर्थः । भूतानामुपजीवनप्रकारं कालभेदेन दर्शयति **तस्य—स**

**तस्य** आदित्यस्य उदयात् **पुरा** पूर्वं यद् रूपम्, स हिङ्कारः । तद्रूपदृष्टिः कर्तव्येत्यर्थः । एवमग्रेऽपि । अस्याऽऽदित्यस्य हिङ्काराख्यं तत् रूप **अन्वायत्ताः** उपजीवन्ति । हि यत एव ते **एतस्य साम्नः** सामरूपस्या संबन्धिहिङ्कारलक्षणरूपोपजीविनः, [**तस्मात्ते हिङ्कुर्वन्ति**] अत एव पशवो हि शब्दं कुर्वन्तीत्यर्थः ।

1. वाऽभावात्, ख. ग. 2. इदं क. कोशे ।

---

पूर्वमुद्गीथे आदित्यदृष्टाविवात्र सामसामान्ये आदित्यदृष्टौ प्रयोजकमैक्यं दर्शयति **सर्व** सामशब्दो गीताविव समत्वेऽपि प्रसिद्धः । समत्वञ्चाऽऽदित्ये द्वेधाऽस्ति, सर्वदा समपरिमा सर्वं प्रति वक्ष्यमाणरीत्या समत्वाच्च । अतः सोऽपि सामेति । ननु हिङ्कारादिषु तत्त ऐक्याध्यासहेतुर्न दर्शितः । अत्र परं कुतः ? अत्र शाङ्करम्, 'सुगमत्वात् तत्र नोक्तम् ; मत्वादत्रोच्यत' इति । एवमेतत् । परन्तु यत्र श्रुतिरैक्याध्यासहेतुमप्युपासनोपयो चिन्तनीयं मन्यते, तत्रावश्यमाह ; अन्यत्र पुनर्नाहेत्यपि भाव्यम् । **सर्वदेति** । न हि तदस्य वृद्धिह्रासाविति । **मां प्रतीति** । विषयोऽयम् 'आदित्यवद् यौगपद्य'मिति सूत्रे श च गृहीतः । प्रतिशब्द आभिमुख्यार्थः । **मां प्रति** मदभिमुख । **सर्वेण सम** इति । इति शेषः । **समः** आभिमुख्यात्मकैकरूपवान् सन् इत्यर्थः ।

अथ यत् प्रथमोदिते स प्रस्तावः। तदस्य मनुष्या अन्वायत्ताः। प्रस्तुतिकामाः प्रशँसाकामाः; प्रस्तावभाजिनो ह्येतस्य साम्नः ॥ ३ ॥

अथ यत् सङ्गववेलायाँ स आदिः। तदस्य वयाँस्यन्वायत्तानि, तान्यन्तरिक्षेऽनारम्बणान्यादायात्मानं परिपतन्ति; आदिभाजीनि साम्नः ॥ ४ ॥

अथ यत् सम्प्रतिमध्यन्दिने स उद्गीथः। तदस्य देवा अन्वायत्ताः। सत्तमाः प्राजापत्यानाम्। उद्गीथभाजिनो ह्येतस्य साम्नः॥ ५ ॥

अथ यदूर्ध्वं मध्यन्दिनात् प्रागपराह्णात्, स प्रतिहारः। तदस्य

---

अथ यत् प्रथमोदिते—साम्नः। [1]प्रथमोदिते प्रथमोदयकाले। प्रथमोच्छिन्न आदित्यः प्रस्तावः। अस्य तथाविधं रूपं मनुष्या उपजीवन्ति। प्रस्तावाख्यप्रथमोदितादित्यरूपोपजीविनः, अत एव मनुष्याः प्रस्तुतिकामाः प्रस्तुतिकामा इत्यस्य विवरणं प्रशंसाकामा इति।

अथ यत् संगव—साम्नः। तानि वयांसि पक्षिणः अनारम्बणानि त[2]शून्यान्येव आत्मानमेव आलम्बनत्वेनाऽऽदाय आकाशे परिपतन्ति। वच्छिन्नादित्यसंबन्ध्यादिशब्दितोङ्काररूपोपजीवित्वादेव आदाय परिपतनं अर्थः। आदिशब्दादायशब्दयोराकारदकारवत्त्वसाम्यमिहाभिप्रेतम्।

अथ यत् संप्रति—साम्नः। संप्रति मध्यन्दिने ऋजुमध्यन्दिने इत्य-जापत्यानां देवासुराणां[4] मध्ये ते सत्तमा [5]उत्तमा इत्यर्थः। उद्गीथ-योः संयुक्ततकारश्रुति[6]मत्त्वसाम्यात् उपजीव्योपजीवकभावोक्तिर्द्रष्टव्या।

अथ यदूर्ध्वं—साम्नः। सवितुः प्रतिहार[7]भक्तिरूपोपजीवित्वादेव[8] ऊर्ध्वं

इदं क.कोशे। 2. आलम्बनशू. क. 3. अवच्छिन्नपदं क कोशे। 4. इदं ।। 5. इदं विवरणं क कोशे। 6. श्रुतित्व क. 7. प्रतिहारात्मकभक्ति क. 8. यथाशाङ्करम्।

---

मध्यन्दिन इति। प्रतिशब्दस्याभिमुख्यार्थकत्वात् संप्रतिशब्दस्य सम्यगभि-प्रति, आभिमुख्यावस्थाने आर्जवावस्थानव्यवहारात् संप्रति साक्षादभिमुखम्, न केंतु ऋजु इति सिध्यति। ऋजुमध्यन्दिनत्वं नाम भूरिप्रयोगानुसारेण मध्यन्दिन-मर्थभूतसङ्गवापराह्णमध्यवर्तिकालविशेषत्वम्। तेनात्यन्तोच्चस्थसूर्यावच्छिन्नस्वल्पकाल-

गर्भा अन्वायत्ताः । तस्मात् ते प्रतिहृता नावपद्यन्ते ; प्रतिहार ह्येतस्य साम्नः ॥ ६ ॥

अथ यदूर्ध्वमपराह्णात् प्रागस्तमयात्, स उपद्रवः । तदस्या अन्वायत्ताः । तस्मात् ते पुरुषं दृष्ट्वा कक्षँ श्वभ्रमित्युपद्रवन्ति ; उप जिनो ह्येतस्य साम्नः ॥ ७ ॥

अथ यत् प्रथमास्तमिते, तन्निधनम् । तदस्य पितरोऽन्वा तस्मात्तान् निदधति ; निधनभाजिनो ह्येतस्य साम्नः ।

एवं खल्वमुमादित्यं सप्तविधँ सामोपास्ते ॥ ८ ॥

इति द्वितीयाध्याये नवमः खण्डः ।

---

प्रतिहृतास्सन्तो गर्भा नावपद्यन्ते द्वारे सत्यपि नाधःपतन्तीत्यर्थः ।

**अथ यदूर्ध्वमपराह्णात्—साम्नः** । आदित्यसंबन्ध्युपद्रवभक्त्युपजीवि पुरुषदर्शनभीतानां [1]कक्षश्वभ्रादिषु उपद्रवणमित्यर्थः[2] ।

**अथ यत् प्रथमास्तमिते—साम्नः** । तस्मात् तान् निदधति । श्र र्तारो हि दर्भेषु पितॄन् * निक्षिपन्ति, तदर्थान् पिण्डान् वेत्यर्थः । [3]निधनभा हि— । निधनोपजीवित्वात् पितॄणां दर्भेषु निधनं प्राप्तवन्तः ।

उक्तमुपासनमुपसंहरति **एवं—उपास्ते** ॥

1. श्वभ्रपदं क. घ.कोशे न । 2. द्रव क. घ. * निवपन्ति घ. 3. एतद्विवरणं क. व

---

मात्ररूपमध्यन्दिनव्यावृत्तिः । **प्रतिहृता** इति । हरणम् अन्यत्र नयनम् । तत्प्रतिकूल प्रतिहरणम् ; मोचनं प्रतिमोचनमितिवत् । **कक्ष**मरण्यम् । श्वभ्रं गर्तगुहादि ।

**एवं खल्विति** । अत्र फलानिर्देशेऽपि औचित्यादस्याऽऽदित्योपासनस्य तदापत्तिः फल शाङ्करे । सर्वभूतोपजीव्यादित्यदृष्ट्यैर्विहितत्वात् सर्वभूतोपजीव्यत्वाद्यपि यथार्हं फलं स्यात् । उपरि आदित्योपासनांशे आदित्यप्राप्तिरूपफलकीर्तनादत्रापि तत् लभ्यत इति श्रुतिर्मन्यते । नुक्तौ कर्मवीर्यवत्तरत्वं फलमस्त्येवेति चाऽऽरम्भ एवाभ्यधायि ।

२—१०.

थ खल्वात्मसंमितमतिमृत्यु सप्तविधँ सामोपासीत — हिङ्कार
 प्रस्ताव इति त्र्यक्षरं तत् समम् ॥ १ ॥ आदिरिति द्व्यक्षरं

थ—उपासीत । अथ अध्यस्तादित्यभावसप्तविधसामोपासनोपदेशा-
नतिक्रान्तादित्यसप्तविधसामोपासनमुपदिश्यत इत्यर्थः । [1]अत्र मृत्युशब्देन
नधीयते । आदित्यस्य अहोरात्रकालवर्तनेन जगन्नाशहेतुत्वात् मृत्युत्वम् ।
त्रामे[3]षामेव परस्परसंमितत्वकथनादात्मसंमितत्वम् । द्वाविंशत्यक्षरात्मकस्य
भक्तिविशेषस्य एकविंशतिलक्षणादित्यसंख्यातिरेकित्वात् अतिमृत्युत्वम् ।
त्मसंमितत्वातिमृत्युत्वप्रकारमेव दर्शयति हिङ्कार इति—समम् । अतश्च
ः समत्वादेव आवापोद्वापौ न कर्तव्यावित्यर्थः । आदिरिति—तत
समम् । [ततः] चतुरक्षरात् एकमक्षरं गृहीत्वा द्व्यक्षरे निवेशिते समं

त्रेति न क. 2. आत्मना ख. ग. 3. एषामिति न क. घ. 4. एत
न. क. कोशे ।

ाशयितमुपासनमाह अथ खल्वात्मेति । अस्योपासनस्य आदित्यप्राप्तिपूर्वकवि-
रूपस्य फलस्य वक्ष्यमाणत्वात् तस्य परमात्मोपासनलभ्यस्य प्रकृतसामोपासनलभ्य-
ाम्नि तेनाऽऽकारेण अतिमृत्युत्वाकारेण च परमात्मसाम्यमात्मसंमितपदविवक्षितमिति
कश्चायमप्यर्थः शाङ्करे, 'परमात्मतुल्यतया वा' इति । अथापि विस्पष्टमुपर्युप-
परत्वसंभवे किमित्यर्थान्तरमिति एकमेवार्थमाह आत्मनामिति । आत्मानः
श्च विधाः संमिताः समसंख्याकनामाक्षरवत्त्वकल्पनया समतया मिताः यस्य तत्
म् । नन्वतिमृत्युत्वोपासनमादित्यात् परस्य नाकस्य प्राप्तये उपयुज्यते । आत्म-
ं तु किमर्थमिति चेत्—आदित्यप्राप्तेरपि फलत्वात्तदर्थं तत् । तथाहि—एकविंश-
तदधिकसंख्यावत्सामचिन्तनाज्जयो भवतीति विमृश्य, साम्नि तत्संख्योपपादने
सप्तविधे साम्नि तत्संख्यायाः स्वरूपे उपपादनासंभवात् वाचकवर्णद्वारा तत्संपत्तिः
ता । एवमतिमृत्युत्वं सिद्धम् । एवमपि आदित्यप्राप्तिरूपफलांशस्य सिध्युपायं
तेः एकविंशतिसंख्यावत्त्वे साम्नः सिद्धे स भवतीति तुल्ययुक्त्या निर्धार्य, तस्यापि
विना संपादनायोगात् तद्द्वारैव तत्संपादनमारभ्य, सामविधानां समत्वात् सप्तसु
ातिमत्त्वमपेक्षितमित्याकलय्य, तत्र प्रत्येकं त्र्यक्षरनामवत्त्वे तत् सुलभमिति मत्वा,
ुर्णां स्वत एव त्र्यक्षरनामकत्वात् भूयोनुसारादन्येषां त्रयाणामपि तथात्वलम्भनेन
य आवापोद्वापौ तत्र व्यदधात् । एवञ्च चतुष्टयानुरोधेन त्रयस्यापि त्र्यक्षरसंपादने-
त्वात् एकविंशतिसंख्यावत्त्वस्यापेक्षितस्य सिद्धिरिति ।

समिति । तदुभयं सममित्यर्थः । अत्र सामनामाक्षराणां त्रिकत्रिकरूपेण समतया
, नामाक्षरेषु आदित्यदृष्ट्योपासनकथनञ्च शाङ्करारूढमनपेक्षितमित्युपेक्षितम् ।

प्रतिहार इति चतुरक्षरं तत इहैकं तत् समम् ॥ २ ॥ उद्गीथ इ
रम् उपद्रव इति चतुरक्षरं त्रिभिस्त्रिभिः समं भवति, अक्षरमति
त्र्यक्षरं तत् समम् ॥ ३ ॥ निधनमिति त्र्यक्षरं तत् सममेव भव
तानि ह वा एतानि द्वाविँशतिरक्षराणि ॥ ४ ॥ एकविँशत्
त्यमाप्नोति । एकविँशो वा इतोऽसावादित्यः । द्वाविँशेन परमादि
यति । तन्नाकं तद्विशोकम् ॥ ५ ॥ आप्नोतिहा[1](तीहा)दित्यस्य

1. आप्नोतीह ख पाठः । अत्र भाष्यपाठोऽपि तदनुसारी । माध्वपाठोऽप्येवम्

भवतीत्यर्थः । **उद्गीथ इति—समम्** । उपद्रव इति चतुरक्षरे एकस्मिन
पृथक्कृते सति अवशिष्टं त्र्यक्षरं सममेव भवतीत्यर्थः । **निधनमिति त्र
तत् सममेव भवति** । [उपसंहरति] **तानि ह—अक्षराणि** । स्पष्टोऽर्थ

**एकविंशत्या—आदित्यः** । 'द्वादश मासाः पञ्चर्तवः त्रय इमे
असावादित्य एकविंशः' इति श्रुतेः[1]यत आदित्यस्य एकविंशत्वम्, अतः ए
भक्तिनामाक्षरगतैकविंशतिसंख्यया[2] एकविंशतिसंख्याकमादित्यं प्राप्नोति । आ
लोकयं प्राप्नोतीत्यर्थः । **द्वाविंशेन—आदित्यस्य जयम्** । अवशिष्टेन
शेनाक्षरेण आदित्यात् परं दुःखासंभिन्नं लोकं [3]आदित्यजयञ्च प्राप्नोती
**परो ह —** । [4]अस्य आदित्यजयात् सर्वोत्कर्षो भवतीत्यर्थः ।

1 असावादित्य' इति आदित्यएकविंशतिर्दृश्यते. क. 2. एकविंशत्या आदित्य
3. अयं क. घ. पाठः । ख. ग. कोशयोः 'लोकमित्येतदनन्तरं, प्राप्नोतीत्यर्थः । उ
(ति) ह्यादित्यस्य जयम् । इह लोके आदित्यजयं प्राप्नोतीत्यर्थः । **परोह—उपास्ते** ।
मुपास्ते तस्य' इति । अस्येत्येतत्स्थाने घ कोशेऽपि 'य एवमुपास्ते तस्य' इति ।
एवमुपास्ते, तस्य. ख.

फलश्रुतौ **एकविंशत्येत्या**दिनोक्तमेव **आप्नोति ह**ेति पुनर्निष्कृष्योच्यत इति शाङ्क
तु **द्वाविंशेने**त्यस्यैव **आप्नोति ह**ेत्यत्राप्यन्वयोऽभिमतः । अयमाशयः—कथन्नु परमात्म
लभ्या नाकप्राप्तिरनया दृष्ट्युपासनया भवतीति शङ्कापरिहारार्थम् **आप्नोति ह**ेत्यादि
स्मादादित्यं प्राप्तो द्वाविंशबलेनादित्यं जेतुं स्ववशे कर्तुमलमासं त , अतस्तद्बलात् तत्रैव
सर्वविधोऽप्युत्कर्षो विशोकनाकप्राप्त्युपायानुष्ठानलक्षणोऽस्य निष्पद्यत इति न दोष इति ।

**नाकम्** । न विद्यते अकं दुःखं यत्रेति **नाकं** नपुंसकम् । तत् पदं प्राप्तस्य, 'अ
बहलः कालो मुधैव मया प्रकृतिमण्डले व्यथितः' इति प्राचीनानुबन्धी शोकोऽपि नास्ति,
स्याप्यंशस्य वर्तमानस्यैव भगवदनुकूलतया स्वानुकूलतयैव भानादिति दर्शयितुं **तद्वि**
**मिति** । **आप्नोति ह**ेत्यत्र आप्नोतीहेति पाठः तदनुसारेण इह लोक इत्यादिभाष्यपाठश्च ।

यादित्यजयाज्जयो भवति । य एतदेवं विद्वान् आत्मसंमितमति-
वविधँ सामोपास्ते सामोपास्ते ।

इति द्वितीयाध्याये दशमः खण्डः ।

---

२—११

मनो हिङ्कारो वाक् प्रस्तावः चक्षुरुद्गीथः श्रोत्रं प्रतिहारः प्राणो
। एतद् गायत्रं प्राणेषु प्रोतम् ॥ १ ॥
स, य एवमेतद् गायत्रं प्राणेषु प्रोतं वेद, प्राणी भवति, सर्वमा-
ज्योग् जीवति, महान् प्रजया पशुभिर्भवति, महान् कीर्त्या ।

---

अथ गायत्ररथन्तरादिसामोपासनं प्रस्तूयते **मनो—निधनम्** । गायत्राख्यस्य
ङ्कारप्रस्तावोद्गीथप्रतिहारनिधनाख्यपञ्चविधभक्तिषु मनोवाक्चक्षुश्श्रोत्रप्राणदृष्टिः
र्थः । **एतद् गायत्रं प्राणेषु प्रोतम्** । अनेनाऽऽकारेण गायत्राख्यस्य साम्नो
गणानाञ्चाध्यासाधिष्ठानभावलक्षणसंबन्धेन परस्परसंबन्ध' इत्यर्थः ।

त[2]स्फलमाह स य—कीर्त्या । प्राणीभवति अविकलेन्द्रियो भवतीत्यर्थः ।
उज्ज्वलः । व्याध्यादिभिरनुपहत इत्यर्थः ।

द्भमि. का दन्यत्र । 2. अयं ख. पाठः । अन्यत्र एतत्सर्वस्थाने महामनस्त्वं
स्कत्वम् । ज्योक् उज्ज्वलो व्याध्यादिभिरनुपहतः । शिष्टं स्पष्टम् इति ।

---

द्र्यः । पूर्वपर्यायेषु सर्वत्र हशब्दघटितमेव फलश्रवणम् । **सामोपास्त** इति
तविशेषानङ्गकसामसामान्योपासनसमाप्तिसूचनार्था । 'द्विरभ्यासः साप्तविध्यसमाप्त्यर्थः'
ङ्करे ।

थ : कतिपयसामविशेषपाञ्चविध्यविषयकदृष्ट्युपासनानि प्रतिनियतव्रतविशेषविशिष्टानि
**मन** इत्यादिना । अत्रापि सामसामान्यपाञ्चविध्य इव प्राणपञ्चकं तदेवोक्तं द्रष्टव्यम् ।
त्र परं, प्राणो मुख्यप्राण इत्युक्तम् । मन इव प्राणोऽपि अयमेव सः । प्राणमनसोः
भेयस्तु विवक्षाभेदात् । **प्रोत**मित्यस्य 'मयि सर्वमिदं प्रोतम्' इत्यादाविव आश्रित-
गादाह **अनेने**ति । तथाच प्रोतं निविष्टं, अन्तर्गतं, गुणीभूतम् । अध्यासस्थले
क्षया अध्यासस्यैव कार्यक्षमतया प्राधान्यात् ।

महामनाः स्यात्; तद् व्रतम् ॥ २ ॥

इति द्वितीयाध्याये एकादशः खण्डः ।

---

२—१२

अभिमन्थति स हिङ्कारः, धूमो जायते स प्रस्तावः, ज्वल
उद्गीथः, अङ्गारा भवन्ति स प्रतिहारः, उपशाम्यति तन्निधनँ सँश
तन्निधनम्। एतद् रथन्तरमग्नौ प्रोतम् ॥ १ ॥

स, य एतदेवं रथन्तरमग्नौ प्रोतं वेद, ब्रह्मवर्चस्य[1]न्नादो :
सर्वमायुरेति, ज्योग् जीवति, महान् प्रजया पशुभिर्भवति, महान् कं
न प्रत्यङ्ङग्निमाचामेन्न निष्ठीवेत्; तद् व्रतम् ॥ २ ॥

इति द्वितीयाध्याये द्वादशः खण्डः ।

---

२—१३

उपमन्त्रयते स हिङ्कारः, ज्ञपयते स प्रस्तावः, स्त्रिया सह
स उद्गीथः, प्रतिस्त्रीं(स्त्रि) सह शेते स प्रतिहारः, कालं गच्छति त
नम्, पारं गच्छति तन्निधनम्। एतद्वामदेव्यं मिथुने प्रोतम् ॥ १ ।

1. वर्चस्व्यन्नादो मा.

---

महामनाः स्यात्। वदान्यमनस्को भवेदित्यर्थः। तद् व्रत
महामनस्कत्वमेतदुपासनाङ्गमित्यर्थः। एवमग्रेपि नेयम्। शिष्टं स्पष्टम्। २—

अभिमन्थति—। उपशमः सावशेषः शमः। निःशेषोपशमः संशम
एतद्रथन्तरं—व्रतम्। अग्नेरभिमुखो नाचामेत् न भक्षयेत्। न निष्ठी
श्लेष्मादिनिरसनञ्च न कुर्यादित्यर्थः ॥ २—१

उपमन्त्रयते—। उपमन्त्रणं संकेतकरणम्। ज्ञपयते—। ज्ञ
तोषणम्। मारणतोषणनिशामनेषु मित्त्वात् ज्ञाधातो र्ह्रस्वः[1]। स्त्रिया सह शेते—
एकपर्यङ्कोपवेशनं सहशयनम्। प्रतिस्त्रि सह—। स्त्रिया आभिमुख्येन शय
मित्यर्थः। कालं-पारं-तत्-। मैथुननिर्वृत्ति[2]रित्यर्थः। एतद् वामदेव्यम्—[3]

1. ह्रस्वत्वम्। क. 2. निवृत्तिः ख. 3. अत्र मध्ये फलमाह स इत्यवतारिका ख. कोः

---

स्त्री प्रति। अत्र प्रतिशब्दार्थ आभिमुख्यम्। कालं क्रियाकालम्। पारं क्रियासमाप्तिम्

।, य एवमेतद् वामदेव्यं मिथुने प्रोतं वेद, मिथुनीभवति, मिथुनात् प्रजायते, सर्वमायुरेति, ज्योग् जीवति, महान् प्रजया ति, महान् कीर्त्या ।
। काञ्चन परिहरेत्; तद् व्रतम् ॥ २ ॥

इति द्वितीयाध्याये त्रयोदशः खण्डः ।

२—१४

यन् हिङ्कारः, उदितः प्रस्तावः, मध्यन्दिन उद्गीथः, अपराह्णः अस्तं यन् निधनम् । एतद् बृहदादित्ये प्रोतम् ॥ १ ॥

; य एवमेतद् बृहदादित्ये प्रोतं वेद, तेजस्व्यन्नादो भवति, ति, ज्योग् जीवति, महान् प्रजया पशुभिर्भवति, महान् कीर्त्या । पन्तं न निन्देत्; तद् व्रतम् ॥ २ ॥

इति द्वितीयाध्याये चतुर्दशः खण्डः ।

---

ति सर्वदा स्त्रिया अवियुक्तो भवतीत्यर्थः । मिथुनान्मिथुनात्प्र· मोघरेता भवतीत्यर्थः । न काञ्चन— । काञ्चन । स्त्रियं[1] प्रार्थयमा- ः । प्रार्थयमानसर्वयोषिद्गमनस्य वामदेव्योपासनाङ्गत्वेन विधानात् पर- तेषेध[2]वचनानि तदतिरिक्तविषयाणि द्रष्टव्यानि ॥ २-१३.

यन्— । आदित्य इति शेषः । मध्यन्दिन उद्गीथः । मध्यन्दिन- न आदित्य उद्गीथ इत्यर्थः । अपराह्णः प्रतिहारः । अपराह्णकाला- दित्यः प्रतिहार इत्यर्थः । अस्तं यन्निधनम् । [3]यन् गच्छन्नित्यर्थः । निन्देत् । तपन्तमादित्यं न निन्देदित्यर्थः ॥ २-१४.

यमिति ख. कोशे । 2. प्रतिषेधक घ. 3. 'यन् निधनमितिच्छेद'

---

इति पदस्वारस्यात् प्रार्थयमानामिति लभ्यते ।

अभ्राणि संप्लवन्ते स हिङ्कारः, मेघो जायते स प्रस्तावः, स उद्गीथः, विद्योतते स्तनयति स प्रतिहारः, उद्गृह्णाति त[न्नि] एतद् वैरूपं पर्जन्ये प्रोतम् ॥ १ ॥

स, य एवमेतद् वैरूपं पर्जन्ये प्रोतं वेद, विरूपांश्च पशूनवरुन्धे, सर्वमायुरेति, ज्योग् जीवति, महान् प्रजया पशु[भि] महान् कीर्त्या ।

वर्षन्तं न निन्देत्; तद् व्रतम् ॥ २ ॥

इति द्वितीयाध्याये पञ्चदशः खण्डः ।

२—१६

वसन्तो हिङ्कारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत् [प्र] हेमन्तो निधनम् । एतद् वैराजमृतुषु प्रोतम् ॥ १ ॥

स, य एवमेतद् वैराजमृतुषु प्रोतं वेद, विराजति प्रजया प[शुभिर्ब्र] ह्मवर्चसेन, सर्वमायुरेति, ज्योग् जीवति, महान् प्रजया पशु[भि] महान् कीर्त्या । ऋतून् न निन्देत्; तद् व्रतम् ॥ २ ॥

इति द्वितीयाध्याये षोडशः खण्डः ।

---

अभ्राणि संप्लवन्ते । अभ्राणि [1]जलधारकत्वमात्रावस्थापन्नानि । सञ्चारः । मेघो जायते । मेघः सेचकत्वावस्थापन्नः । उद्गृह्णाति । वर्षसमाप्तिः । एतद् वैरूपं— । वैरूपं वैरूपाख्यं सामेत्यर्थः । [2]स य— विरूपान्[3] विरुद्धनानारूपान् सुरूपान्[4] शोभनरूपान् । अवरुन्धे प्राप्नो[ति] वर्षन्तम्—[5]वर्षन्तं पर्जन्यमित्यर्थः ॥

वसन्तः— । [6]वैराजं वैराजाख्यं सामेत्यर्थः ॥

1. एवमर्थवर्णनं न क. कोशे । 2. अत्र 'फलम्' इत्यधिकं. ख. 3. विविध[वि]रुद्धनानारूपान् घ. 4. शोभननानारूपान् क. 5. स्पष्टमित्यधिकं ख. 6. इदं [...]

---

अभ्राणि । अपां भरणात् । यद्वा, 'न भ्रश्यन्ति यतस्तेभ्यो जलान्यभ्राणि (वि. पु. २-९.) इति दर्शिता व्युत्पत्तिः । मेघः । मिह सेचने ।

२—१७.

[पृ]थिवी हिङ्कारोऽन्तरिक्षं प्रस्तावो द्यौरुद्गीथो दिशः प्रतिहारः [नि]धनम् । एताः शक्वर्यो लोकेषु प्रोताः ॥ १ ॥
[स], य एवमेताः शक्वर्यो लोकेषु प्रोता वेद, लोकी भवति, सर्व[मायुरेति], ज्योग् जीवति, महान् प्रजया पशुभिर्भवति, महान् कीर्त्या । [लोका]न निन्देत् ; तद् व्रतम् । इति द्वितीयाध्याये सप्तदशः खण्डः ।

२—१८.

अजा हिङ्कारोऽवयः प्रस्तावो गाव उद्गीथोऽश्वाः प्रतिहारः पुरुषो [निधनम्] । एता रेवत्यः पशुषु प्रोताः ॥ १ ॥ स, य एवमेता रेवत्यः [पशुषु प्रो]ता वेद, पशुमान् भवति, सर्वमायुरेति, ज्योग् जीवति, महान् [प्रजया] पशुभिर्भवति, महान् कीर्त्या । पशून् न निन्देत्; तद् व्रतम् ॥ २ ॥
इति द्वितीयाध्याये अष्टादशः खण्डः ।

२—१९.

लोम हिङ्कारः त्वक् प्रस्तावो मांसमुद्गीथोऽस्थि प्रतिहारो मज्जा [निधनम्] ; एतद् यज्ञायज्ञीयमङ्गेषु प्रोतम् ॥ १ ॥
स, य एवमेतद् यज्ञायज्ञीयमङ्गेषु प्रोतं वेद, अङ्गीभवति, नाङ्गेन [विहूर्च्छ]ति, सर्वमायुरेति, ज्योग् जीवति, महान् प्रजया पशुभिर्भवति,

---

पृथिवी— । शक्वर्यः शक्वर्याख्यं सामेत्यर्थः । नित्यबहुवचनम् । [लोकी] भवति उत्तमलोकप्राप्तो भवतीत्यर्थः । शिष्टं स्पष्टम् । ] ॥ २—१७.

अजा—। रेवत्य इत्यपि शक्वर्य इतिवत् नित्यबहुवचनं । [1]सामविशेषनाम ॥

लोम— । स्पष्टम् । स य— । [2]अङ्गीभवति समग्राङ्गयुक्तो भवती- [त्यर्थः ।] नाङ्गेन विहूर्च्छति । अङ्गेन हस्तपादादिना न विहूर्छति कुटिलो न [भवतीत्य]र्थः । हुर्च्छा कौटिल्ये इति हि धातुः । संवत्सरं मज्ज्ञो नाश्नीयात्

[1]. रेवत्याख्यं सामेत्यर्थः क [2]. एतत्पूर्वं, यज्ञायज्ञीयं सामेति क.

---

[श]क्वर्य इति द्वितीयपक्षे प्रथमा द्वितीयार्थे । एवं रेवत्यः

महान् कीर्त्या । संवत्सरं मज्ज्ञो[1] नाश्नीयात्; तद् व्रतम्; [1]नाश्नीयादिति वा ॥ २ ॥ इति द्वितीयाध्याये एकोनविंशः खण्डः

२—२०.

अग्निर्हिङ्कारो वायुः प्रस्ताव आदित्य उद्गीथो नक्षत्राणि प्रतिहारश्चन्द्रमा निधनम्, एतद् राजनं देवतासु प्रोतम् ॥ १ ॥

स, य एवमेतद् राजनं देवतासु प्रोतं वेद, एतासामेव देवतानां सलोकतां सार्ष्टितां सायुज्यं गच्छति, सर्वमायुरेति, ज्योग् जीवति, प्रजया पशुभिर्भवति, महान् कीर्त्या । ब्राह्मणान् न निन्देत्, तद् व्रतम् ॥ २ ॥ इति द्वितीयाध्याये विंशः खण्डः

२—२१.

त्रयी विद्या हिङ्कारस्त्रय इमे लोकास्स प्रस्तावोऽग्निर्वायुरादित्यस्स उद्गीथो नक्षत्राणि वयाँसि मरीचयस्स प्रतिहारः सर्पा गन्धर्वाः पितरस्तन्निधनम् । एतत् साम सर्वस्मिन् प्रोतम् ॥ १ ॥

स य एवमेतत् साम सर्वस्मिन् प्रोतं वेद, सर्वँ ह भवति ॥

1. मज्ञो मा. (मत्त इत्यर्थः) 2. मज्ञु मा. (मदकारि इत्यर्थः)

---

तद्व्रतम्—। मज्ज्ञः मज्जाख्यमांसविशेषानित्यर्थः । मज्ज्ञो नाश्नीयादि[1]व्रतम् । सर्वदेति शेषः ॥ २.

अग्निः— । स्पष्टम् । राजनं राजनाख्यं सामेत्यर्थः । स य— । ...ष्टिता समानर्द्धित्वम् । सायुज्यं समानभोग्यत्वम् । ब्राह्मणान्न निन्देत् तद्व्र... 'एते वै देवाः प्रत्यक्षं यद् ब्राह्मणाः' इति श्रुतेः ब्राह्मणनिन्दैव देवतानि... भावः ॥ २.

त्रयी— । स्पष्टम् । अत्र सामनामविशेषानिर्देशात् सामशब्दः सामसा... परः । स — सर्वँ ह भवति । काम्यमानं सर्वमाप्नोतीत्यर्थः । [2]भूः प्राप्त्य...

1. व्रतमिति पदं न ख. कोशे. 2. अयं क. पाठः । भूर्व्याप्त्यर्थः, इति घ. नेदं ख. कोशे । काम्यमानमित्यतः प्राक् 'तस्य सर्वं हि भवति' इत्यस्ति ।

---

एवं सामविशेषविषया दृष्टीर्विधाय पुनः सामसामान्यविषयकमेकमुत्कृष्टमन्यत्र... व्रतविशेषात्मकं दृष्ट्युपासनमन्ते विदधाति — त्रयीति । अग्न्यादीनामिव, ऋगादिवेद... अग्न्यादिदेवताऽऽविर्भावितया पृथिव्यादिलोकैः संबन्धो बहुश्रुतिसिद्ध इति अत्र तद्घटनमुप...

श्लोकः—

**यानि पञ्चधा त्रीणि त्रीणि तेभ्यो न ज्यायः परमन्यदस्ति । (३)**
**यस्तद् वेद स वेद सर्वं सर्वा दिशो बलिमस्मै हरन्ति ॥**
**सर्वमस्मीत्युपासीत, तद् व्रतम् तद् व्रतम् ॥ ४ ॥**

इति द्वितीयाध्याये एकविंशः खण्डः

२–२२.

**विनर्दि साम्नो वृणे पशव्यमित्यग्नेरुद्गीथोऽनिरुक्तः प्रजापतेर्निरुक्त-**

---

**तदेष श्लोकः** । तत् उक्ते सर्वात्मकसामोपासने एषः वक्ष्यमाणो मन्त्रोऽप्य-
ः । तमेवाह—**यानि — त्रीणि** । 'त्रयी विद्या हिङ्कारः, त्रय इमे
' इत्यादिनोक्तानि' [ त्रयी विद्या, लोकत्रयम्, अग्निवाय्वादित्याः, नक्षत्र-
ीचयः, सर्पगन्धर्वपितरश्चेत्येतानि ] यानि त्रीणि [2]त्रीणि हिङ्कारादिरूपेण पञ्चधा
त्यर्थः[3] । **तेभ्यो—स्ति** । अतः परमुत्कृष्टमन्यच्छ्रेयः किमपि नास्तीत्यर्थः ।
**वेद स वेद सर्वम्** । [4]तदुपासकः सर्वज्ञो भवतीत्यर्थः । **सर्वा—हरन्ति** ।
वर्तिनोऽपि वशीकृता असौ उपासकायोपहारान् समर्पयन्तीत्यर्थः ।

**सर्वमस्मीत्युपासीत** । सामसामान्ये उक्तरीत्या [5]सर्वत्वाश्रयत्वेन स्वाभिन्न-
त्रोपासना कर्तव्येत्यर्थः । **तद् व्रतम्** । तस्य तदेव व्रतम्; नान्यद् व्रतम-
ः । द्विरुक्तिः सामोपासनसमाप्त्यर्था ॥ २–२१.

एवं सामोपासनं समाप्य गानविशेषान् उद्गातुरुपदिशति—**विनर्दि—** ।

1. 'इत्युक्तानि यानि' इत्येतावदेव. क. 2. 'त्रीणि' इति सकृत् ख. घ.
ावन्ति, अतः पर' मित्येकीकृतं ख. कोशे 4. एतदुपासकः ख. 5. सर्वाश्रयत्वेन क.
ाथत्वेन घ.

---

ीति । **सर्वं ह भवती**त्यस्य सर्वाभेदपरत्वं बाधितम् । अतः 'प्राणेषु प्रोतं वेद, प्राणी
इत्यादाविव, सर्वी भवतीत्यत्र तात्पर्यमित्याशयः । श्लोके **स वेद सर्व**मित्युक्तमपि
्यमानसर्वान्तर्गतमेव । पूर्वं निषेधव्रतान्युक्तानि; अत्र विधिव्रतमुच्यते **सर्वमस्मी**ति ।
ामान्ये इत्यादि । नन्वयमर्थ उदक्षरः, स्वस्य सर्वाभिन्नत्वेनोपासनस्यैव विधानाव-
–उच्यते—पूर्वं साम्नि सर्वाभेददृष्टेर्विहिततया एवमुपासकः सर्वमिति सर्वाभिन्नतया
ं सामैव गृह्णीयात् । तथाच तदभिन्नत्वेन 'अस्मि' इति स्वानुसंधाने कृते साम्नः सर्वा-
स्वाभिन्नत्वाभ्यामनुसंधानं कृतं भवतीति ।

एतावता सामोपासनविशेषाः प्रपञ्चिताः । अथास्मिन् द्वाविंशे खण्डे सामगानस्वरविशेष-

**स्सोमस्य मृदु श्लक्ष्णं वायोः श्लक्ष्णं बलवदिन्द्रस्य क्रौञ्चं बृहस्पतेर वरुणस्य । तान् सर्वानेवोपसेवेत, वारुणं त्वेव वर्जयेत् ॥ १ ॥**

---

विशिष्टो **नर्दः** स्वरविशेषः ऋषभकूजितसमः[1] । सोऽस्यास्तीति **विनर्दि** । वाक्यशेषः । **साम्नः** सामसंबन्धि । **पशव्यं** पशुहितम् । "उगवादिभ्य इति यत् । सामसंबन्धिविनर्दिगानं **वृणे** प्रार्थयेत । पुरुषव्यत्ययः छा **अग्नेरुद्गीथोऽनिरुक्तः** । अग्निदेवत्य[2]मुद्गानमस्पष्टं भवति । अस्पष्टो ग योऽग्निप्रीतिहेतुर्भवतीत्यर्थः । **प्रजापतेर्निरुक्तः** । निरुक्तः स्पष्टो गानविशे पतिदेवत्यः प्रजापतिप्रीतिहेतुरित्यर्थः । **सोमस्य मृदु श्लक्ष्णं वायोः श्ल** स्पष्टम् । **बलवदिन्द्रस्य** । बलवत् बलवत्प्रयत्नोपेतमित्यर्थः । **क्रौञ्चं बृ** क्रौञ्चपक्षिनादसमं बार्हस्पत्यं गानमित्यर्थः । **अपध्वान्तं वरुणस्य** । भिन्न वारुणगानमित्यर्थः । **तान्** --- । अपध्वान्तगानव्यतिरिक्तान् सर्वान् उद्गी सेवेतेत्यर्थः ।

1. सभासः क. 2. देवत्येत्यत्र सर्वत्र देवत्येति ख.

---

प्रीयमाणदेवताविशेषापदेशेन तत्र हेयोपादेयविवेकम्, गानकाले प्रमादं विना अर्थात्, गेयवर्णविशेषसंबन्धिदेवताविशेषप्रदर्शनेन तत्तदनुकूलं तत्प्रयोगरीतिञ्च प्रति **पशव्यम्** । ऋषभस्य पशुत्वात् ऋषभकूजितसमस्य पशव्यता । **अनिरुक्तः** । त्वेनागृहीत इति शाङ्करे । 'उपहव्योऽनिरुक्तः' इत्यत्र (पू. मी. १०-३-१८) गानयुक्तत्वादुपहव्यस्यानिरुक्तत्वमुक्तम् । नन्वेकस्यानिरुक्तत्वे अन्यः सर्वो निरुक्तो भवेत् निरुक्तत्वे वा अन्यः सर्वोऽप्यनिरुक्तः । तत् कथं निरुक्तानिरुक्तत्वदन्यानेकगणनम् । कश्चित् कार्त्स्न्येन निरुक्तः ; कश्चिच्च कार्त्स्न्येनानिरुक्तः ; अन्ये चांशतो निरुक्ता अ स्यादिति । **अग्निदेवत्यमुद्गानमस्पष्टमिति** अग्न्युद्गीथस्यानिरुक्तत्वं विशेषणमत्रेष्ट तु प्रजापतेरनिरुक्तत्वात् अनिरुक्तो गानविशेषः प्रजापतेरित्युक्तम् । श्रुतिशैलीयं **श्लक्ष्णं बलवदिन्द्रस्ये**त्यारभ्य पूर्वं गानवाचिपदस्य, पश्चाद् देवताशब्दस्य च पूर्वमपि तथैव युक्तम्; यथा **अमृतत्वमि**त्याद्युत्तरवाक्येऽपि । तत्र श्लक्ष्णे बलवत्त्व नात्, श्लक्ष्णान्तरे मृदुत्वविशेषणदानञ्च समुचितम् । एवञ्च वायोः मृदुश्लक्ष्णः निरुक्तः, प्रजापतेरनिरुक्त इति संपद्यते । तर्हि अग्नेः क इति चेत्—**विनर्दि सा** देवतासाकाङ्क्षो यः; स एव । एवञ्चाग्निपदात् पूर्वप्रयुक्तपदगम्य एव तदीय इ तत्र, 'विनर्दि गानं सामसंबन्धि पशव्यमग्निदेवत्यमुद्गानं अहं वृणे इति कश्चिन्मन्त्र ध्याहारादिपूर्वकशाङ्करयोजनायाः क्लिष्टत्वेऽपि, 'विनर्दि साम्नो वृणे पशव्य'मि उद्गीथः उच्चगानमग्नेरिति भवितुमर्हति । तदत्रादृता योजना विमृश्या, 'उत्तरे

अमृतत्वं देवेभ्य आगायानीत्यागायेत्; स्वधां पितृभ्य आशां यस्तृणोदकं पशुभ्यः, स्वर्गं लोकं यजमानाय, अन्नमात्मन आगाया-एतानि मनसा ध्यायन् अप्रमत्तः स्तुवीत ॥ २ ॥

सर्वे स्वरा इन्द्रस्यात्मानः, सर्व ऊष्माणः प्रजापतेरात्मानः, सर्वे मृत्योरात्मानः। तं यदि स्वरेषूपालभेत, 'इन्द्रं शरणं प्रपन्नोऽभू-र त्वा प्रतिवक्ष्यती' त्येनं ब्रूयात् ॥ ३ ॥ अथ यद्येनमूष्मसूपाल-

---

अमृतत्वं — आगायेत्। अमृतत्वप्राप्तिम् आगायानि गानेन साध-आगायेत् गानं कुर्यादित्यर्थः। यथाप्रार्थनं फलं भवतीति भावः। स्वधां ः। आगायानीति सर्वत्र संबन्धः। [1]आशां— अन्नमात्मने। आगाया-येदित्यर्थः। एतानि—स्तुवीत। एतानि देवामृतत्वादीनि फलानि यायन् स्वरादिष्वप्रमत्तः सन् स्तोत्रं कुर्यादित्यर्थः।

सर्वे—आत्मानः। अचः स्वराः। आत्मानः अवयवसदृशा इत्यर्थः। ऊष्माणः। कादयो मावसानाः स्पर्शाः। तं यदि स्वरेषूपालभेत। । (न्द्र) मुद्गातारं यदि कश्चिदागत्य, 'त्वया दुष्टः स्वरः प्रयुक्तः' इत्युपालम्भं यर्थः। इन्द्रं—ब्रूयात्। 'इन्द्रमहं शरणं गतः। तस्मादिन्द्र एव तव दास्यती'ति[3] तदा तमाक्षेप्तारं प्रति ब्रूयादित्यर्थः। अथ यदि—। स

१. इदं वाक्यं ख. कोशे। 2. स्वरेषु अज्लक्षणस्वरेषु एवंविध इति क. 3. 'दास्य-इत्येतावदेव ख. कोशादन्यत्र।

---

हितत्वस्यैवात्र विनर्दित्वः पशुहितत्वस्योक्तत्वात् विनर्दिगानमभेदेन भवति। उद्गीथ इति तृगानसाधारणम्। अतः अनिरुक्त एवाग्नेरित्याशयेन वाऽन्यथा वेति। सर्वानिति र्वाहाय उद्गीथानिति पूर्वोक्तपदेन पूरणम्।

आशाम् आशाविषयम्। आगायानीति सर्वत्रेति। आगायानीति इति वक्ष्य-सर्वत्रेत्यर्थः। एवं पूर्वोक्तस्य आगायेदित्यस्यापि संबन्धं दर्शयति आगायेदित्यर्थ

स्वरा इति। स्वरोष्मादिशब्दाः ईदृशश्रुतिमूलमेव व्याकरणे गृह्यन्ते।

भेत, 'प्रजापतिँ शरणं प्रपन्नोऽभूवँ स त्वा प्रतिपेक्ष्यती' त्येनं ब्रूयात्
अथ यद्येनँ स्पर्शेषूपालभेत, 'मृत्युँ शरणं प्रपन्नोऽभूवँ स त्वा प्रतिध
ती'त्येनं ब्रूयात् ॥ ४ ॥

सर्वे स्वरा घोषवन्तो बलवन्तो वक्तव्याः, 'इन्द्रे बलं दधानी'।
सर्व ऊष्माणोऽग्रस्ता अनिरस्ता विवृता[1] वक्तव्याः, 'प्रजापतेमात्मानं प
ददानीति । सर्वे स्पर्शा लेशेनानभि[2]निहिता वक्तव्याः, 'मृत्योरात
परिहराणी' ति ॥ ५ ॥ इति द्वितीयाध्याये द्वाविंशः खण्डः

1. विवृत्ताः मा. क्वचित् । क्वचिदेवं शाङ्करास्मदीयपाठोऽपि । 2. अनभिहताः

त्वा प्रतिपेक्ष्यति—। [1]त्वा प्रति त्वां प्रति पेक्ष्यति चूर्णयिष्यतीत्यर्थः । पिष्ल संचू
इति हि धातुः । धक्ष्यति भस्मीकरिष्यतीत्यर्थः । दह भस्मीकरण इति हि धा

सर्वे—दधानीति । घोषवत्तया बलवत्तयोच्चारणमिन्द्रस्य बलाधा
मित्यर्थः । सर्वे ऊष्माणः अग्रस्ता अनिरस्ता विवृताः[2] —। अग्रस्ताः अ
प्रवेशिताः । अनिरस्ताः बहिरक्षिप्ताः । 'लुप्तवर्णपदं ग्रस्तं निरस्तं त्वरितोदित
इत्यमरः । विवृताः विवृतप्रयत्नोपेताः । प्रजापतेरात्मानं परिददानीति
ऊष्मणां प्राजापत्यात्मकत्वात् अग्रस्तत्वादियुक्तोष्मोच्चारणे प्रजापतेरात्मलाभो भव
त्यर्थः । सर्वे स्पर्शाः —। लेशेन अल्पशः । अनभिनिहिताः अनभिक्षिप्त
अद्रुतोच्चारिता इति यावत् । मृत्योरात्मानं परिहराणीति। सर्वेषां स्पर्श
मृत्य्वात्मकत्वात् स्पर्शानां तेषां दोषेभ्यः परिहृत्योच्चारणे मृत्योरात्मैव दोषेभ्यः
हृतो भवतीति भावः ॥ २—

1. नेदं विवरणं घ. कोशे । 2. विवृता इत्यत्र विवृत्ता इति सर्वत्र ख. कोशे ।

प्रतिपेक्ष्यति प्रतिधक्ष्यतीति प्रतिशब्दः प्रतिकारार्थः । उपालम्भप्रतिकारभूतं
दाहञ्च करिष्यतीति । प्रतिवक्ष्यतीत्यत्राप्येतदर्थ उचितः । वक्ष्यतीति च वहनं प्रापण
वचनमेव वाऽस्तु ।

अनभिनिहिताः । अनभिनिक्षिप्ता इति शाङ्करम् । तेनानतिद्रुतोच्चारणं विवक्षित
त्यानन्दगिर्युक्तत्वात् तत्राभौचित्याय नीत्युपसर्गं परित्यज्य अनभिक्षिप्ता इति व्याख्यात
लेशो लाघवमिति न्यायभाष्यम् । लेशेन वक्तव्या इत्यस्य विवरणम् अनभिनिक्षिप्ता इतील
कारे ऊष्मोच्चारणकाले तत्स्थानोपमर्दं विना अनायासेन लाघवेन प्रयोगोऽभिमतः स्यात् ।

२—२३.

त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमः, तप एव द्वितीयः, र्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन् । सर्वे यलोका भवन्ति ; ब्रह्मसँस्थोऽमृतत्वमेति ॥ १ ॥

ओङ्कारेण ब्रह्मोपासनं विधातुं प्रस्तौति—त्रयो धर्मस्कन्धाः । धर्मस्कन्धाः क्रमार्गाः । आश्रमरूपमार्गाः त्रय इत्यर्थः । यज्ञो—प्रथमः । यज्ञाध्य- ाब्दैः गृहस्थाश्रमः [प्रथम] उच्यते । अध्ययनशब्दो वेदाभ्यासपरः । व द्वितीयः । तपश्शब्देन वैखानसपारिव्राज्ययोर्ग्रहणम् । उभयोस्तपः- त् । तपश्शब्दो हि कायक्लेशे रूढः । स च द्वयोरपि समानः । ब्रह्मचारी कुलवासी, तृतीयोऽत्यन्त—सादयन् -- अत्यन्तमाचार्यकुले नियमैर्देहं तृतीय आश्रम[1] इत्यर्थः । सर्वे एते — एति । एवं त्रित्वेन संगृहीतानां श्रमाणां मध्ये यो ब्रह्मसंस्थः ब्रह्मनिष्ठः, स मुक्तिभाग् भवति ; ब्रह्मनिष्ठा- : केवलाश्रमिणः पुण्यलोकभाजो भवन्तीत्यर्थः । एवमेव हि, "अनुष्ठेयं णः साम्यश्रुतेः" इत्यत्र भाषितम् । न चात्र ब्रह्मसंस्थशब्दात् संन्यासाश्रम- रिति शक्यं[2] वक्तुम् -- ब्रह्मसंस्थशब्दस्य प्रोक्षणीन्यायेन योगेनैव वृत्त्युपपत्तौ रूढेरनभ्युपगन्तव्यत्वात् । योगमात्रस्य चाश्रमान्तरसाधारण्यात् न[3] ब्रह्मसंस्थ-

1. तृतीयाश्रमः ख. 2. शक्यम् ख. 3. न हि क.

वेदाभ्यासः । अध्ययनं धारणाध्ययनम् । ग्रहणाध्ययनस्य प्रागेव निर्वृत्तत्वादिति दिनाऽऽवृत्तिपरेण तद्विवरणम् । ब्रह्मचारीत्यादि । यावज्जीवाचार्यकुलवासादिविशिष्टब्रह्म- यावत् । उपक्रमस्थस्कन्धादिपदानां पुरुषपर्यन्तपरत्वस्याखरसत्वात् । कुलं गृहम् । ताच्छील्ये णिनिः । कारणान्तरप्रयुक्तवासपरिहाराय, आचार्याभावेऽपि तत्संततिपरिचर्या- तद्विवरणमत्यन्तमित्यादि । अत्र प्रथमो द्वितीयस्तृतीय इति उक्तिक्रममनुरुध्य । न भम् । पूर्वं गृहस्थकर्तव्ययज्ञान्तर्गतसामाश्रितोपासनानामेव प्रस्तुतत्वात् प्रथमं तदा- नम् । ततस्तेनापि लभ्यस्य तदुत्तरस्य वानप्रस्थादेः ; अथ शिष्टस्य । ननु उपकुर्वा- र्थं कुतो नोक्तम्? यावज्जीवसंभाविताश्रममात्रकथनस्याभिमतत्वात् । अत्रेदं श्रुतिविव उक्तनानोपासननिष्ठगृहस्थो वा तदुत्तराश्रमी वा नैष्ठिको वा यावज्जीवमेवं सन् पुण्य- कमपि प्राप्नुयात् ; नामृतत्वम्, यदि ब्रह्मसंस्थो न भवेदिति ।

भाषितमिति । तदिदं प्राचीनवृत्तिकारवर्णितमेव । शाङ्करे तु यत् एतद्दूषणेनार्थान्तर- । तत्र मुख्यांशं दूषयति न चेत्यादिना ।

**प्रजापतिर्लोकानभ्यतपत् । तेभ्योऽभितप्तेभ्यस्त्रयी विद्या सं॰ स्रवत् । तामभ्यतपत् । तस्या अभितप्ताया एतान्यक्षराणि संप्रास्र भूर्भुवस्सुवरिति । तान्यभ्यतपत् । तेभ्योऽभितप्तेभ्य ओङ्कारः संप्रास्र तद् यथा शङ्कुना सर्वाणि पर्णानि संतृण्णानि, एवमोङ्कारेण सर्वा संतृण्णा । ओङ्कार एवेदँ सर्वम् ओङ्कार एवेदँ सर्वम् ॥ ३ ॥**

इति द्वितीयाध्याये त्रयोविंशः खण्डः

---

शब्देन संन्यासाश्रमग्रहणे प्रमाणं पश्यामः । न च संपूर्वस्य तिष्ठतेः समाप्ति कत्वात् अनन्यव्यापारत्वलक्षणाया[1] ब्रह्मणि समाप्तेः संन्यासिष्विवाग्निहोत्रादिक रव्यग्राश्रमान्तरेष्वसंभवात् ब्रह्मसंस्थशब्देन परिव्राडेवोच्यत इति वाच्यम्—स मोचितधर्मव्यग्रतायाः संन्यासिष्वप्यविशिष्टत्वात् । तदतिरिक्तव्यापाराराहित्यस्य श्रमेष्वपि संभवात् न[2] ब्रह्मसंस्थशब्देन चतुर्थाश्रमपरामर्शे[3] हेतुं पश्यामः ।

एवं **ब्रह्मसंस्थोऽमृतत्वमेती**त्यमृतत्वसाधनं ब्रह्मोपासनमुक्त्वा तत् प्रणवा मिति वक्तुं प्रणवं [4]स्तौति—**प्रजापतिर्लोकानाभ्यतपत्** । **अभ्यतपत्** निष्कर्षाय लोकान् पर्यालोचयदित्यर्थः । [[5]तप आलोचने । ] **तेभ्यो—प्रास्र** त्रयी विद्या **संप्रास्रवत्** सारत्वेन निष्पन्नाऽभवदित्यर्थः । एवमुत्तरत्रापि द्रष्टव्य **तां** त्रयीविद्यामित्यर्थः । **तद्यथा—सर्वम्** । यथा सर्वाणि पत्रजातानि शङ्कुना प लेन **संतृण्णानि** व्याप्तानि भवन्ति, एवम्, 'ओङ्कारो वै सर्वा वाक्' इति ; ओङ्कारेण सर्वा वाग् व्याप्ता । अत ओङ्कार एव सर्वं वाङ्मयम् । अत ओङ्क ब्रह्मोपासनं कर्तव्यमिति पर्यवसितोऽर्थः । द्विरुक्तिर्विद्यासमाप्त्यर्था ॥ २—

1. व्यापारलक्षणया क. 2. न च क. 3. परामर्शहेतुं ख. 4. प्रस्तौति 5. इदं क. कोशे ।

---

ननु तर्हि ब्रह्मसंस्थित्यै किमुपादेयम् । उच्यते, न किञ्चिदन्वेषणीयमस्ति । उक्तो नाश्रयतया प्रथमप्रस्तुतं ओमित्येतदक्षरमेवोपादेयं सर्वमित्याह **प्रजापतिरिति** । **तेभ्योऽभि तप्तेभ्यस्त्रयीति** । एतल्लोकाधिष्ठानदेवताभ्योऽग्निवाय्वादित्येभ्य एतदाविर्भावः 'अग्नेः ऋग इत्यादौ, ४–१७, च श्रूयते । एवमत एव ऋगादेः पृथिव्यादिप्रापकत्वमपि । **वाङ्मयमि** ओङ्कारस्य परम्परया लोकसंप्रसूतत्वात् लोका अप्योङ्कार एव ।

## २—२४.

ह्मवादिनो वदन्ति —, यद् वसूनां प्रातस्सवनँ रुद्राणां माध्य-
ानमादित्यानाञ्च[1] विश्वेषाञ्च देवानां तृतीयसवनम् ॥ १ ॥; क्व
मानस्य लोक इति ।

' — यस्तन्न विद्यात् — कथं कुर्यात्? अथ विद्वान् कुर्यात् ॥ २ ॥
रा प्रातरनुवाकस्योपाकरणात्, जघनेन गार्हपत्यस्योदङ्मुख उप-

आदित्यानां विश्वेषां देवानाञ्च मा.

---

सङ्गात् कर्माङ्गानि कानिचिद् विधातुं प्रस्तौति — ब्रह्मवादिनो — लोक
ातस्सवनमाध्यन्दिनसवनतृतीयसवनेश्वरैः वसुरुद्रादित्यविश्व[2]देवैः [3]पृथि-
त्रलोकानां वशीकृततया अवशिष्टस्य लोकस्याभावात् यजमानस्य लोकः
वेदितव्यमित्यर्थः ।

' यस्तन्न विद्यात् कथं कुर्यात् । यस्य यजमानप्राप्यलोकस्थानज्ञानं नास्ति,
थं कर्म[4] कुर्यात् । अथ विद्वान् कुर्यात् । तस्मात् लोकस्वीकरणोपायभूतं
सामगान—होम—मन्त्रोत्थानलक्षणं ज्ञात्वैव कुर्यादित्यर्थः ।

देवाह — पुरा प्रातः — । प्रातरनुवाकस्योपाकरणात् पुरा प्रातरनु-
त् प्राक् गार्हपत्यस्य जघनेन पश्चात् उदङ्मुख उपविश्य वासवं वसुदे-

अत्र मध्ये, 'ब्रह्मवादिनो वेदवेत्तार इत्यर्थः । ते किं वदन्तीत्यत्राह यद्वसूनां प्रात
' इत्यधिकं ख. कोशे । एवं पाठे वेत्तारइत्यत्र वेदितारइति वा वक्तारइत्येव व।
२. अयं ग. पाठः । अन्यत्र विश्वैर्देवैरिति । ३. अत्र 'तत्सवनफलभूताः पृथिव्य-
का वशीकृता इत्यर्थः । क तर्हि—। एवं त्रैलोकानां वशीकृततयाऽवशिष्टस्य लोकस्य
स्याभावात्' इति ख. 4. कर्मेति ख. कोशे ।

---

ङ्गादिति । पुण्यलोकप्रसङ्गात् लोकत्रयाविर्भूतप्रणवप्रसङ्गाच्च लोकत्रयरूपयजमान-
रिति भावः । तन्न विद्यादित्यत्र तमिति विभज्य लोकस्वीकारोपायमिति व्याख्यातं
ति जिज्ञासितस्थानपरत्वं युक्तमिति अत्राभिमतम् । तथाच तदिति च्छेदः । अथ
। सामगानं होमः मन्त्रपूर्वकमुत्थानमिति त्रयं वक्ष्यमाणं विदुषः स्थानवेदनमपि
क्ष्यतीति भावः । वक्ष्यते च सवनं संप्रयच्छन्तीति स्थानमपि । प्रातरनुवाकः
स्त्रम् । अप्रतीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं शस्त्रम् । सामगाने मन्त्रानुपूर्व्यास्ति-

विश्य स वासवँ सामाभिगायति (३)—:[1] 'लोकद्वारमपावार्णू
श्येम त्वा व्रयँ रा ३ ३ ३ ३ ऽ ३ हुं ३ आ २ ३ ३ जा ३ यो
२ ४ ५' इति ॥ ४ ॥ अथ जुहोति, 'नमोऽग्नये पृथिवीक्षिते
लोकं मे यजमानाय विन्द । एष वै यजमानस्य लोकः । एतास्मि
अत्र यजमानः परस्तादायुषः । स्वाहा'। 'अपजहि परिघम्'
त्तिष्ठति । तस्मै वसवः प्रातस्सवनँ संप्रयच्छन्ति ॥ ६ ॥

पुरा माध्यन्दिनस्य सवनस्योपाकरणात्, जघनेनाग्नीध्र
ङ्मुख उपविश्य स रौद्रं सामाभिगायति (७)—:'लोकद्वारम
३ ३ पश्येम त्वा वयं विरा ३ ३ ३ ३ हुं आ ३ ३ जा (ज्या)

1. एषां साम्नां स्वरनिवेशरीतिः प्रतिकोशं भिन्ना दृश्यते ।

वत्यं साम सः विद्वान् गायेदित्यर्थः । तदेव सामाह — लोकद्वारमपावृ
त्वा वयं राज्यायेति । हे अग्ने! पृथिवीलोकप्राप्तये द्वारमपावृणु ।
द्वारेण त्वां राज्याय [1]पृथिवीलोकप्राप्तिफलाय पश्येमेत्यर्थः । अथ जुहो
अनन्तरं अनेन [वक्ष्यमाणेन] मन्त्रेण जुहोतीत्यर्थः । होममन्त्रमेवाह नमो
पृथिवीक्षिते पृथिवीनिवासाय, लोकक्षिते लोकनिवासाय अग्नये नमः
यजमानाय लोकं विन्द लम्भय[2] । एष वै मम यजमानस्य लोकः । यजमा
अस्मिन् लोके आयुषः परस्तात् मरणादूर्ध्वम् एतास्मि आगन्तास्मि ।
जुहोतीत्यर्थः । अपजहि — उत्तिष्ठति । एवं हुत्वा अनन्तरं परिघं लो
लमपजहि अपनय इति एतं मन्त्रम् उक्त्वोत्तिष्ठतीत्यर्थः । तस्मै—यच्छ
सामगान-होम-मन्त्रोत्थानकृते यजमानाय वसवः प्रातःसवनसंबन्धिलोकं प्र
प्रयच्छन्तीत्यर्थः । [3]एवमग्रेऽपि द्रष्टव्यम् ।

आग्नीध्रीयस्य अग्नेरित्यर्थः । रौद्रं रुद्रदेवताकमित्यर्थः ।
अन्तरिलोकफलप्राप्तय इत्यर्थः । अथ — । अथ 'नमो वायवे —' इ

1. फलायेति क. परिपालनायेति घ. 2. लम्भयस्व, ख. 3 नेदं ख. को

रोहितत्वात् आनुपूर्वीं दर्शयति लोक—वृणु—राज्यायेति । उत्तरसामभन्त्रत्रये वै
स्वाराज्याय, साम्राज्यायेति भेदः । एतास्मीत्यारभ्य आयुष इत्यन्तमेकं
अत्रेति आयुष इत्यनेनान्वेति । यद्वा अत्र यजमानः अत्र यागं कुर्वन्नहमित्यर्थः

५' इति ॥ ८ ॥ अथ जुहोति, 'नमो वायवेऽन्तरिक्षक्षिते लोक-
लोकं मे यजमानाय विन्द । एष वै यजमानस्य लोकः । एता-
९ ॥ अत्र यजमानः परस्तादायुषः । स्वाहा' । 'अपजहि परि-
त्युक्त्वोत्तिष्ठति । तस्मै रुद्रा माध्यन्दिनँ सवनँ संप्रयच्छन्ति ॥ १० ॥

पुरा तृतीयसवनस्योपाकरणात्, जघनेनाहवनीयस्योदङ्मुख उप-
स आदित्यँ स वैश्वदेवँ सामाभिगायति (११)—: 'लोकद्वार-
र्णू २ ३ ३ पश्येम त्वा वयँ स्वरा ३ ३ ३ ३ हुं आ २ ३ ३ जा ३
आ ३ ४ ५' इत्यादित्यम् ॥ १२ ॥; अथ वैश्वदेवम् – 'लोकद्वार-
र्णू २ ३ ३ पश्येम त्वा वयँ साम्रा ३ ३ ३ ३ हु ३ म् आ २ ३ ३ जा
यो ३ आ ३ १ १ १' इति ॥ १३ ॥ अथ जुहोति, 'नम आदित्ये-
विश्वेभ्यश्च देवेभ्यो दिविक्षिद्भ्यो लोकक्षिद्भ्यः । लोकं मे यजमा-
विन्दत ॥ १४ ॥ एष वै यजमानस्य लोकः । एतास्म्यत्र यजमानः
आयुषः । स्वाहा' । 'अपहत परिघम्' इत्युक्त्वोत्तिष्ठति ॥ १५ ॥
आदित्याश्च विश्वे च देवास्तृतीयसवनँ संप्रयच्छन्ति ॥

---

त्यर्थः । **अन्तरिक्षक्षिते** अन्तरिक्षनिवासायेत्यादि पूर्ववदुन्नेयम्[1] । **माध्य-
सवनं** माध्यन्दिनसवनसंबन्धिलोकम् ।

**आहवनीयस्य** अग्नेरित्यर्थः । **आदित्य**मादित्यदेवत्यम् । **वैश्वदेवं** विश्व-
त्यमित्यर्थः । तत्रादित्यं सामाह **लोकद्वार**— । **स्वारा**ज्याय स्वर्गलोकायेत्यर्थः ।
**देत्यम्** । साम उक्तमिति शेषः । **अथ वैश्वदेवम्** । सामोच्यत इति शेषः ।
**ज्याय** उत्तमस्वर्गफलायेत्यर्थः । **अथ जुहोति** — । सर्वं पूर्ववद् द्रष्टव्यम् ।
नां विश्वदेवानाञ्च बहुत्वात् **विन्दत** अपहत इति बहुवचनम् । **तृतीय-**
तत्फलं स्वर्गमित्यर्थः ।

1, उन्नेयमिति ग. पाठः । नेयमिति ख.

**एष ह वै यज्ञस्य मात्रां वेद, य एवं वेद य एवं वेद ॥**

इति द्वितीयाध्याये चतुर्विंशः खण्डः

इति छान्दोग्योपनिषदि द्वितीयोऽध्यायः (द्वितीयः प्रपाठकः)।

---

अथ तृतीयोऽध्यायः ३-१.

**असौ वा आदित्यो देवमधु। तस्य द्यौरेव तिरश्चीनवंशोऽ-न्तरिक्षमपूपो मरीचयः पुत्राः ॥ १ ॥**

---

**एष ह वै यज्ञस्य मात्रां वेद**। मात्रां = [1]परिमाणं याथात्म्यमित्यर्थः। **य एवं वेद**। य एवं कर्तुं वेदेत्यर्थः। द्विरुक्तिरध्यायपरिसमाप्त्यर्था ॥ :

इति छान्दोग्योपनिषत्प्रकाशिकायां द्वितीयोऽध्यायः (द्वितीयः प्रपाठकः)

---

मधुविद्या प्रस्तूयते—**असौ वा आदित्यो देवमधु**। असाव-वस्वादीनां देवाना[2]मामोदहेतुत्वात् मधु। अत्र मधुत्वदृष्टिः कर्तव्येत्यर्थः। ... पयोगीनि संपादयति—**तस्य द्यौरेव तिरश्चीनवंशः**। तस्य आदित्याख्य... द्युलोक एव आधारभूतस्तिर्यक्प्रसारितो[3] वंश इत्यर्थः। **अन्तरिक्षमपूपः** अ... मध्वपूपः। मध्वाश्रयोऽपूपो हि तिरश्चीनवंशलग्नस्सन् लम्बते। एवमन्त... द्युलोकलग्नं लम्बते इव [4]भातीत्यतो मध्वपूपत्वम्। **मरीचयः पुत्राः**। मरीचि... मरीचिस्थाः सवित्राकृष्टाः भौम्य आप उच्यन्ते। ताः पुत्रा इव पुत्राः भ्रमरबी... मध्वपूपच्छिद्रस्थाः [5]सूक्ष्मकीटा इत्यर्थः।

1. परिमाणमित्यधिकं क. कोशे। 2. देवानां मोद ख. 3. प्रसारितोमशोवं... 4. भाति। अतो क. 5. सूक्ष्माः कीटाः ख.

---

...थीयोऽग्निः दक्षिणाग्निः। य एवं वेदेति नोपासनविशेषविधिरिति ज्ञापयितुं कर्तुं... व्याख्यानम् ॥

वसुरुद्रादित्यानुग्रहलभ्यलोकत्रयवर्णनं प्रस्तुत्य वसुरुद्रादित्यादिरूपतापत्तिपूर्वका... फलार्था मुक्तिविद्या समनन्तरमुपदिश्यते। आदित्यस्य मधुत्वं रसाश्रयत्वात्। मधुरसाश्च ... भ्रमरैः समाह्रियन्ते। तथेह समाहारो वक्ष्यते। तत्र, 'अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्य...

**।स्य ये प्राञ्चो रश्मयः, ता एवास्य प्राच्यो मधुनाड्यः, ऋच एव ; ऋग्वेद एव पुष्पम्; ता अमृता आपः ॥ २ ॥**

**।स्य**—। **तस्य** आदित्यस्य ये प्राञ्चो रश्मयः, ता एव प्राग्दिगवच्छिन्ना ।ः मधुच्छिद्राणि । **ऋच एव मधुकृतः।** ऋङ्मन्त्रा एव भ्रमराः। **एव पुष्पम्** ऋग्वेदविहितं कर्म पुष्पस्थानीयम्। [[1]अस्मिन् पुष्पस्थानीये ।हिते कर्मणि मधुकरस्थानीयैः ऋङ्मन्त्रैराकृष्य मधुत्वेन निर्वर्त्यमानो रसः ।ह—] **ता अमृता आपः।** ताः कर्मणि प्रयुक्तसोमाज्यपयोरूपा आपः क्षिप्ताः पाकाभिनिर्वृत्ता अमृता अत्यन्तरसवत्यो भवन्तीत्यर्थः ।

[1] अयं कुण्डलितः ख. पाठः ।

ःकरीत्या अनुष्ठाने सत्येव आदित्ये रसप्राप्तिः, रसवद्भ्यः कर्मभ्य एव रसानामादे- न तु रसप्रतिपादकत्वेऽपि रससंबन्धरहिताद् वेदमात्रादिति ऋग्वेदादीनां पुष्पत्वोक्तिः हितकर्मणां पुष्पत्वाभिप्राया। व्यक्तमिदं **श्रीभाष्ये**, 'मधुविद्यायामृग्वेदादिप्रतिपाद्यकर्म- रश्मिद्वारेण प्राप्तस्य रसस्याश्रयतया लब्धमधुव्यपदेशस्यादित्यस्य' इति। ऋगादि- वेहाय कर्मानुष्ठाने च न रसस्यादित्यप्राप्तिः। अत एव 'प्रास्ताहुतिः सम्यक्' इति दप्रयोगः। अतो मन्त्रा भ्रमराः। तत्र ऋग्यजुस्साममन्त्रभ्रमरचूष्यमाणानि पुष्पाणि ामवेदाः। अथर्वाङ्गिरोदृष्टमन्त्ररूपभ्रमरविषये तु इतिहासपुराणं पुष्पमुक्तम्। तत्र ासपुराणवत् इतिहासादिप्रधानकाण्डवेदब्राह्मणमपीति ग्राह्यम्। पञ्चमास्तु गुह्यादेशाः। ह्माख्यं पुष्पञ्च किमिति विचारे ब्रह्म प्रणव इति शाङ्करम्। तत्र प्रणवपूर्वककर्मनिष्पाद्याः । अपीति विशेषाभावात् ब्रह्मशब्देन, परेण ब्रह्मणा व्यूहविभवाद्यवतारेषु स्वप्राद्यवस्था- ोषेणोपदिष्टपाञ्चरात्रादितन्मूलभूतैकायनाद्यनन्तवेदात्मकशब्दब्रह्मग्रहणं युक्तमिति तदुप- दाराधनकर्माणि पुष्पाणि। तत्रोपयुज्यमाना विशेषमन्त्रा वैदिकाः तान्त्रिकाश्च गुह्या- । युक्तम्। अस्तु वा ऋग्वेदाद्यन्तर्गतब्रह्मपरोपनिषद्भागानामपि ब्रह्मपदविवक्षितत्वम्। ञ्चविधामृतरसाश्रयमधु असावादित्य इति भावयित्वा तत्रैकैकामृतं वस्वादितत्तदेकैकदेव- ्मानं भावयेत्। तत्रैकैकामृतविषयेऽपि, 'य एवमेतदमृतं वेदे'ति पृथक्पृथक् विदि- ्णात् वस्वाद्यैकैकदेवगणभुज्यमानैकैकामृतमात्रोपासनमेकैकफलोद्देशेन पृथक्पृथक् कर्तुं ति वा मन्यताम्; सर्वोपासनसमाहारमेव स्वीकृत्य प्रत्येकविदिश्रवणं तत्क्रतुन्यायेन तस्य ात् फलमिति ज्ञापनार्थमिति वा निरूप्यताम्। अवशिष्टमुपरिष्टात्।

**मरीचयः**। जलाकर्षणकारित्वावस्थाभाजः किरणाः मरीचिपदव्यपदेश्याः। **अमृताः**। ं हविरप्यमृतपदार्थः।

ता वा एता ऋच एतमृग्वेदमभ्यतपन्; तस्याभितप्तस्य य
इन्द्रियं वीर्यमन्नाद्यँ रसोऽजायत ॥ ३ ॥

तद् व्यक्षरत्। तदादित्यमभितोऽश्रयत्। तद्वा एतत्, यदे
त्यस्य रोहितँ रूपम् ॥ ४ ॥ इति तृतीयाध्याये प्रथमः खण्डः

३—२.

अथ येऽस्य दक्षिणा रश्मयः, ता एवास्य दक्षिणा मधु
यजूँष्येव मधुकृतः; यजुर्वेद एव पुष्पम्; ता अमृता आपः ॥ १

तानि वा एतानि यजूँषि एतं यजुर्वेदमभ्यतपन्; तस्याभि
यशस्तेज इन्द्रियं वीर्यमन्नाद्यँ रसोऽजायत ॥ २ ॥

तद् व्यक्षरत्। तदादित्यमभितोऽश्रयत्। तद्वा एतद्, यदेत
त्यस्य शुक्लँ रूपम् ॥ ३ ॥ इति तृतीयाध्याये द्वितीयः खण्डः

---

ता वा एता ऋच एतमृग्वेदमभ्यतपन्। ता वा एता ऋचः ऋ
भ्रमरस्थानीयाः, पुष्पेभ्यो रसमाददाना भ्रमरा इव, एतदृग्वेदविहितं कर्म पु
नीयमभ्यतपन् अभितापं कृतवत्य[1] इव। तस्य—अजायत। यशस्तेजइन्
र्यान्नाद्यलक्षणो रसोऽजायतेत्यर्थः। ऋग्भिर्मन्त्रैः स्तोत्रशस्त्राद्यङ्गभावमुपगतैः
माणं कर्म मधुनिर्वर्तकं सोमाज्यादिरसं मुञ्चति, पुष्पमिव भ्रमरैराचूष्यमाणम्[2]
च यशस्तेजइन्द्रियपाटववीर्यादिलक्षणं फलमुत्पन्नं भवतीत्यर्थः।

तद् व्यक्षरत्। तत् यशआदिलक्षणं फलं व्यक्षरत् विशेषेणा
तदादित्यमभितोऽश्रयत्। गत्वा चादित्यमभितः आश्रितवदित्यर्थः। तद्—
आदित्ये प्रत्यक्षतः परिदृश्यमानं यद् रोहितरूपम्, तत् कर्मनिर्वर्त्ययशस्तेज
लक्षणफलरूपमित्यर्थः। रोहितरूपे तद्बुद्धिः कर्तव्येति यावत् ॥

1, कृतवन्तः क. 2, आचोष्यमाणम् ख. आचरिष्यमाणं घ

---

अभ्यतपन्। भ्रमरैराचूषणतापेन हि पुष्पं पारिपाच्य रसो निष्कास्यते। अः
करणादितस्तापः। पुष्पगतद्रवांशस्य रसतापत्तिरिव कर्मोपयुक्तहविर्भागानां यशआ
विवर्तः। क्षरणं स्यन्दनम्। अभित इति। अस्य सर्वत इत्यर्थे सत्यपि प्राग्रश्मिरूपम
निष्पन्नस्य मधुनः प्राग्भागवर्तित्वं युक्तम्, एवं मध्वन्तरस्य पार्श्वान्तरे इत्याकलय्येव
अभितः पार्श्वतः, पूर्वभागं सवितुरिति व्याख्यातम्।

## ३—३.

अथ येऽस्य प्रत्यञ्चो रश्मयः, ता एवास्य प्रतीच्यो मधुनाड्यः;
व मधुकृतः; सामवेद एव पुष्पम्; ता अमृता आपः ॥ १ ॥

तानि वा एतानि सामानि एतँ सामवेदमभ्यतपन्; तस्याभितप्तस्य
। इन्द्रियं वीर्यमन्नाद्यं रसोऽजायत ॥ २ ॥

तद् व्यक्षरत्; तदादित्यमभितोऽश्रयत्; तद्वा एतत्, यदेतदा-
। कृष्णँ रूपम् ॥ ३ ॥

इति तृतीयाध्याये तृतीयः खण्डः

---

## ३—४.

अथ येऽस्योदञ्चो रश्मयः, ता एवास्योदीच्यो मधुनाड्यः; अथ-
। एव मधुकृतः; इतिहासपुराणं पुष्पम्; ता अमृता आपः ॥ १ ॥

ते वा एतेऽथर्वाङ्गिरस एतदितिहासपुराणमभ्यतपन्; तस्याभि-
यशस्तेज इन्द्रियं वीर्यमन्नाद्यँ रसोऽजायत ॥ २ ॥

तद् व्यक्षरत्; तदादित्यमभितोऽश्रयत्; तद् वा एतत्, यदे-
त्यस्य परःकृष्णँ रूपम् ॥ ३ ॥

इति तृतीयाध्याये चतुर्थः खण्डः

---

---

अथ येऽस्य — [1]अथर्वाङ्गिरस एव मधुकृतः। अथर्वणा अङ्गिरसा च
त्राः अथर्वाङ्गिरसः। इतिहासपुराणं पुष्पम्। इतिहासपुराणविहितकर्मसु
रसां मन्त्राणां विनियोगात् ऋग्वेदादिवत् पुष्पत्वोक्ति[2]रिति द्रष्टव्यम्।
-परःकृष्णं रूपम्। परःकृष्णं रूपम् अतिशयित[3]कृष्णरूपमित्यर्थः[4]। ३-४.

. अत्र ख. कोशे, 'अथ येऽस्य दक्षिणारश्मय इत्यादि। सर्वं पूर्ववन्नेयम्।
प्रत्यञ्चो रश्मय इत्यादि। पूर्ववेव' इत्यधिकम्। 2. पुष्पत्वोक्तिस्तेषामिति ख.
कश्चेति ग. 3. अतिशयितं ख. ग. 4. अत्र, 'अन्यत् सर्वं पूर्ववन्नेयम् इति ख.

३—५.

अथ येऽस्योर्ध्वा रश्मयः, ता एवास्योर्ध्वा मधुनाड्यः, गुह्या आदेशा मधुकृतः, ब्रह्मैव पुष्पम्; ता अमृता आपः ॥ १ ॥

ते वा एते गुह्या आदेशा एतद् ब्रह्माभ्यतपन्; तस्याभि यशस्तेज इन्द्रियं वीर्यमन्नाद्यँ रसोऽजायत ॥ २ ॥

तद् व्यक्षरत्; तदादित्यमभितोऽश्रयत्; तद्वा एतद्, यदे दित्यस्य मध्येक्षोभत इव ॥ ३ ॥

ते वा एते रसानाँ रसाः; वेदा हि रसाः; तेषामेते रसाः; वा एतान्यमृतानाममृतानि; वेदा ह्यमृताः; तेषामेतान्यमृतानि ॥

इति तृतीयाध्याये पञ्चमः खण्डः

---

अथ—गुह्या एवादेशाः—। ब्रह्मविषयकोपनिषद्रहस्योपदेशा इत्यः —आदित्यस्य मध्ये क्षोभत इव। समाहितदृष्टिभिर्वीक्ष्यमाणमादित्यमण्डल चलतीव स्फुरतीत्यर्थः ॥

ते वा—अमृतानि। लोकसारभूतवेदादिप्रतिपाद्यकर्मनिष्पाद्यत्वात् रो दिरूपाणामतिरसत्वम्। तथा[1] इष्टतत्साधनप्रतिपादकतया अमृतेभ्यो वेदेभ्योऽपि हितादिरूपाणां तत्प्रतिपाद्यकर्मनिष्पाद्यानामतिभोग्यत्वात् अमृतादप्यमृतत्वमित्यर्थः

अयमत्र निर्गलितार्थः—प्रागाद्यूर्ध्वदेशान्त[2]स्थितरश्मिनाडीतः तत्तद्वे कर्मकुसुमेभ्यः तत्तद्वैदिकमन्त्रमधुकरैरादित्यमण्डलमानीतानि सोमाज्यपयःप्रभृति निष्पन्नानि यशस्तेजो वीर्यमिन्द्रियमित्येवमात्मकानि रोहितं शुक्लं कृष्णं परः मध्येक्षोभत इवेत्युक्तानि रोहितादीनि पञ्चामृतानि आदित्य[3]मध्याश्रितानीति ॥

एषां पञ्चानाममृतानां वसुरुद्रादित्यमरुत्साध्यगणभोग्यत्वम्, [ उक्तेन प्रका तदुपासीनानां वसुत्वादिप्राप्तिपूर्वकब्रह्मप्राप्तिञ्च प्रतिपादयति—

1, वेदेभ्योपीति पदमत्र ख, ग. 2, देशान्तर, ख. 3, त्यमध्या ख

३—६.

द् यत् प्रथमममृतम्, तद् वसव उपजीवन्त्यग्निना मुखेन; न वै
न्ति, न पिबन्ति; एतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥; त
पमभिसंविशन्ति; एतस्माद्रूपादुद्यन्ति ॥ २ ॥
य एतदेवममृतं वेद, वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं
ति; स एतदेव रूपमभिसंविशति; एतस्माद्रूपादुदेति ॥ ३ ॥

---

द् यत् प्रथमममृतम्। तद् वसव उपजीवन्त्यग्निना मुखेन। अग्नि-
ो रोहितरूपलक्षणं प्रथमममृतमुपजीवन्तीत्यर्थः। उपजीवनं भक्षणमिति शङ्कां
न वै देवा अश्नन्ति, न पिबन्ति। चन्द्रमिवेति भावः। पुनः कथ
मत्यत आह एतदेवामृतं दृष्ट्वा तृप्यन्ति। यशस्तेजआदिलक्षणं रोहितं
करणैरुपलभ्य तृप्यन्तीत्यर्थः। त—विशन्ति। एतदेव रूपमभिलक्ष्य
येति यावत्—संविशन्ति भोगानन्तर[2]मुदासीना भवन्तीत्यर्थः। एत-
ादुद्यन्ति। प्राप्ते भोगकाले इति शेषः। एतस्माद्रूपादिति ल्यब्लोपे
एतद्रूपानुभवमुद्दिश्य उद्यन्ति सोत्साहा भवन्तीत्यर्थः।

य एतदेवममृतं वेद। एवम् अनेन प्रकारेण = वसुतृप्त्याधायक-
त्वलक्षणवसूपजीव्यत्वादिना रोहितामृतं यो वेदेत्यर्थः। वसूनामेव—
ते। तत्क्रतुन्यायेन सः तदुपासीनोऽपि वसुत्वं प्राप्य तथैव भवतीत्यर्थः।
ालमित्यत आह—स याव——पर्येता। आदित्यस्य प्राच्यां दिश्युदयः
स्तमयश्च यावन्तं कालमनुवर्तते, तावन्तं कालं वसूनां यत् आधिपत्यं यत्
संकल्पत्वलक्षणं स्वाराज्यञ्च, तत् पर्येता परितो गन्तेत्यर्थः। ३-६.

अग्निं पुरस्कृत्य क. [2] तृप्ता आसीना भवन्ति. क.

---

न्द्रमिवेति। एष सोमो राजा (५-१०) इत्युक्तरीत्या चन्द्रभावं प्राप्तं जीवमिवेत्यर्थः।
नां चन्द्रकलापातृत्वमप्यौपचारिकमित्याशयेन एवमुक्तम्।

वैः करणैरुपलभ्येति। गुणवत्ताप्रथारूपशब्दादिनानारूपयशआदिफलानां चक्षुर्मात्र-
ात् यथायथं करणग्रहणाय दृष्ट्वेत्यस्यैवं व्याख्यानम्। दृष्ट्वा तृप्त्यनन्तरमभिसंवेश
पुनरनुभवोपयोगिसात्मीकरणाय। वक्ष्यमाणो वाऽन्न हेतुः।

स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता, वसूनामेव ता पत्यँ स्वाराज्यं पर्येता ॥ ४ ॥ इति तृतीयाध्याये षष्ठः खण्डः

३—७.

अथ यद् द्वितीयममृतम्, तद् रुद्रा उपजीवन्तीन्द्रेण मुखे वै देवा अश्नन्ति, न पिबन्ति; एतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १
एतदेव रूपमभिसंविशन्ति ; एतस्माद्रूपादुद्यन्ति ॥ २ ॥
स य एतदेवममृतं वेद, रुद्राणामेवैको भूत्वेन्द्रेणैव मुखेनैत दृष्ट्वा तृप्यति ; स एतदेव रूपमभिसंविशति ; एतस्माद्रूपादुदेति ॥ ३
स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता, द्विस्तावत्, द उदेतोत्तरतोऽस्तमेता, रुद्राणामेव तावदाधिपत्यँ स्वाराज्यं पर्येता ।

इति तृतीयाध्याये सप्तमः खण्डः

---

[1]स यावदादित्यः पुरस्तात्— द्विस्तावत्— । पुरस्तादुदयपश्चादस्तम द्विगुणकालं दक्षिणतउदयमुत्तरतोऽस्तमयञ्च कल्पयित्वा श्रुतिर्ब्रवीतीति नात्र कार्या[2] ।

1 अत्र ख. कोशे, 'अथ यद् द्वितीय—इत्यादि । सर्वं पूर्ववद् द्रष्टव्यम्
2. शिष्टं स्पष्टम् ख.

---

नात्र कथन्तेति । अनेन, अत्र विमर्शनीयं विस्तरभियोपेक्ष्यत इति सूच्यते हि—आदित्यस्य पुरस्तादुदयः पश्चादस्तमयश्चैव प्रसिद्धः, न तु दक्षिणत उदयादि पश्चादुदयादिकमपि वक्ष्यमाणमनुपपन्नम् । एवमादित्योदयास्तमयकालो यावान्, तावतोऽ सोगकालतया तदतिरिक्तादित्यकालस्यैवाभावेन द्विस्तावदिति रुद्रभोगकालस्य वसुभो द्वैगुण्यवर्णनमप्यनुपपन्नम् । एवमुपर्युपरि द्वैगुण्यं वक्ष्यमाणमपि । किञ्च मेरुं परितः वरुणसोमपुरीः प्रकाश्य भ्रमतः आदित्यस्य सर्वत्र तुल्यरूपा गतिरिति दक्षिणोदयोत्तरास्त प्रागुदयादिकालतो द्वैगुण्यमपि दुरुपपादमिति शङ्काः प्रादुर्भवन्ति । अत्र **शाङ्करे**, ' परिहार **आचार्यैः**' इत्यारभ्य, 'अमरावत्यादीनां पुरीणां द्विगुणोत्तरोत्तरेण कालेनोद्वास इत्यादिना प्रागुदयादिकालाद्यपेक्षया दक्षिणोदयादिकालेषु द्वैगुण्यमुपपादितम् । अत्र नि चार्याः **द्रमिडाचार्या** इति **आनन्दगिरीया**दवगम्यते । तैरनेकत्रोपेक्षितानामप्यस

माचार्याणां ग्रन्थस्य अद्यानुपलम्भात्, अस्फुटत्वाच्च पङ्क्तेः पूर्वापरसंदर्भस्य च, तेषां
ह किंरूप इति दुर्गमम्। अमरावतीस्थितिकालात् द्विगुणकाले यमपुरीस्थितिरित्येव-
याङ्गीकारात् प्रागादिस्थितवस्वाद्यपेक्षया दक्षिणादिस्थितरुद्रादिभोगो द्विगुण इत्येतावत्
ताम्। कथञ्चामरावत्यादेः शीघ्रमुद्वासनियमः। अतस्तत्तद्दूरूहांशकल्पनापेक्षया वरं
ोत्तरास्तमयादिकं तद्द्वैगुण्यञ्च श्रुतौ कल्पितमितीति भाष्ये अपाततः प्रतीयते।
ुद्वासापेक्षया अमरावत्यादितो वस्वादिपदप्राप्तोद्वासो युक्त इत्यपि भाष्याशय इव।
। किञ्चिदह विचार्यते — वसुरुद्रादित्यादयस्तावत् अकृतवैवस्वतमन्वन्तरे वर्तमाना
तत्र वसुपदं प्राप्तस्य एकमन्वन्तरस्थायिनः आकल्पं प्रागुदयप्रत्यगस्तमयप्रवर्तकस्यादि-
तेकाले यावत् फलभोगः कथम्? एवं तद्भोग एव क्षीणायुष, कल्पस्यावसितत्वाद्
श्च कदेति। तत्रैवं समादधुः—उपायान्तरेण वसुभूतस्य मन्वन्तरमात्रस्थायित्वेऽपि
वसुर्भवन् आकल्पस्थायी स्यात्। एकैकामृतमात्रोपासनपक्षे वसुभूतस्य रुद्रादिपदप्रस-
रुद्रादिरूपेण भवन्नपि अनेकैः कल्पैरेव भोगान् अनुभवतु। तावद्विलम्बसहिष्णोरेव
प्रकारादिति॥
तुतः यावदादित्यस्थिति आधिपत्यं पर्येतेत्यनिर्दिश्य, **यावत् उदेताऽस्तमेतेति** निर्देशे
किञ्चिदूह्यम्। तदेवमूह्यते—पूर्वं **दृष्ट्वा तृप्यन्ति, अभिसंविशन्ति, उद्यन्तीति**
भोगो युक्तः। तेन मध्ये औदासीन्यं रोहितादिरूपदर्शनाभावादिति ग्राह्यम्।
ास्य उदयात् प्रभृति अस्तमयं यावदेव भवति, न पश्चादिति सर्वविदितम्। एवञ्च
ाडीनिष्पन्नरसाश्रयं मधु द्रष्टुं पूर्वदिक्प्रान्ते स्थितो वसुः पूर्वदिगवच्छिन्नोदयप्रभृति
र्यन्तमेव पश्येत्। तत्तद्देशस्थितानां जनानां तत्तद्देशोदयदर्शनादर्शनग्रहणेनैवोदयास्तमय
ानुभविकत्वात्। अत एवोक्तम्, **यावत् पुरस्तादुदेता पश्चादस्तमेतेति**। एवं
सामार्जितं मधु पश्यन् रुद्रः तद्दिगवच्छिन्नोदयाद्यस्तमयान्तमेव पश्येदिति **यावद्-
उदेते**त्यादि। अत्र प्राग्दक्षिणादिव्यवहारः अस्मद्दृष्ट्या। उदयास्तमयव्यवहारः वस्वादि-
ृष्टया। एवं तत्तद्दिगवच्छिन्नरश्मिसंपादितमधुदर्शनं तत्रतत्र स्थितेन स्वदेशा-
यकालमारभ्य त्रिंशन्नाडीपर्यन्तं क्रियते, तदनन्तरञ्च तत्तद्दिक्प्रतिदिशि तदस्तमयात्
। पुनः रात्र्यपाये स्वदेशे उदयप्राप्त्या पुनर्दर्शनात् **एतस्माद्रूपादुदेती**त्युच्यते। मेरु-
ामरावत्यादिसर्वदिङ्नगरीषु समवेगं परिभ्रमतश्चादित्यस्य पुरस्तादुदयात् त्रिंशन्नाड्यः
गमे सतीति स एवास्तमयः। दक्षिणदेशोदयात् त्रिंशन्नाड्य उत्तरदिक्संगमकाल इति
स्तमय इत्येवं ग्राह्यम्। एवं तत्तद्दिशिस्थितैरादित्यानुभवश्च **श्रुतप्रकाशिकायां** संगृ-
वसुरुद्रादित्यमरुत्साध्यगणा एकैकं प्रतिदिशमुपरि च स्थित्वा आदित्यं प्रधानमनुभ-
। एवञ्च **यावत् पुरस्तादुदेते**त्यादिवाक्यं न सूर्यस्थितिकालपर्यन्ततदनुभवप्रति-
किन्तु तस्यतस्याह्नि तदनुभवः, न रात्राविन्यर्थदर्शकम्। नन्वादित्यदर्शनस्य रात्राव-
वसुनिष्ठाधिपत्यस्वाराज्ययोः रात्रौ संभवेन, 'यावत् अस्तमेता, तावत्—पर्येते'ति रात्रौ
कथमिति चेत्—वसुभुज्यमानरसाश्रयमधूपासकस्य मध्वनुभवातिरिक्तविलक्षणाधिपत्य-

३—८.

अथ यत् तृतीयममृतम्, तदादित्या उपजीवन्ति वरुणेन न वै देवा अश्नन्ति, न पिबन्ति; एतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १
एतदेव रूपमभिसंविशन्ति; एतस्माद्रूपादुद्यन्ति ॥ २ ॥

स य एतदेवममृतं वेद, आदित्यानामेवैको भूत्वा वरुणेनै तदेवामृतं दृष्ट्वा तृप्यति; स एतदेव रूपमभिसंविशति; एतस्माद्रूपादुदे

स यावदादित्यो दक्षिणत उदेता उत्तरतोऽस्तमेता, द्वि पश्चादुदेता पुरस्तादस्तमेता, आदित्यानामेव तावदाधिपत्यँ पर्येता ॥ ४ ॥ इति तृतीयाध्याये अष्टमः खण्डः

---

स्वाराज्यसंबन्धे प्रमाणाभावेन तदुपयोग्याधिपत्यादिरेव तदर्थ इति । किञ्चतु अद्रसु भव इत्येतत्तु गमकान्तरनिर्णेयम् । संवेशानुवृत्तेः पुनरुदयस्य श्रवणादनेकस्मिन् दिन इति सिद्धम् दुदयपश्चादस्तमयमध्यं यावत् वसुभोगकालात्मकम्, द्विस्ता त रुद्रस्य । परन्तु तत उक्तवि दयोत्तरास्तमयमध्यकालात्मकमिति श्रुतिवाक्यार्थः । एवमत्र द्वैगुण्यस्य, तयो रितनभो उत्तरोत्तरद्वैगुण्यस्य श्रुत्या दर्शितत्वात् वसुरुद्रादीनामेकमन्वन्तरस्थायित्वात् तं मन्वन्त त्रिंशदंशात्मना विभज्य एकोंशो वसुभोगकालः, अंशद्वयं रुद्रस्य, अंशचतुष्कमादित्यस्य, मरुत, अंशषोडशकं साध्यस्येति विनियोगो भाव्यः । तत्र यावन्त्यहानि यस्य संभवन्ति तस्याऽऽदित्यानुभवो मधुविद्याफलम् । एवञ्चोपासको वसुपदमात्रकामनयोपासने आ न्यताम्; आंशिकपक्षे वसूनां रुद्राद्युपासनसंभ न सामान्यतो मध्वादित्वस्यैव दित्युक्तेर दिना तत्पक्षायोगे कृत्स्नकामनया कृत्स्न एव वा । फलं तु एवं परिमितमिति न काचिद

एवञ्चास्य भाष्यस्यायमर्थः — पुरस्तादुदयपश्चादस्तमयौ वसुभोगे यावन्तौ इष्टौ, तावदपेक्षया द्विगुणतया रुद्रभोगार्थं दक्षिणोदयादी यथावत् परिकल्प्यै फलं ब्रवीतीति नात्र काचिदनुपपत्तिरिति । नन्वयमुपासको वस्वादिरेव वा वस्वादिस वेति चेत् — स विचार उपरि भाष्य एव भविष्यति । साक्षाद् वसुत्वे तत्फलमनुभूय रु प्रस्थितौ मध्य एवान्यो वसुत्वेन कल्प्यते । वसुसमानभोगत्वे तु न किञ्चित् । सर्वमपि र भगवतः सुकरम् । वस्तुतः प्रधानभूतानां वस्वादीनामष्टत्वादिना संख्याततत्वेऽपि तद अन्येऽपि वस्वादिव्यपदेशभाजः स्युरेव । यथा, 'एकादशैते कथिता रुद्रास्त्रिभुवनेश्वरा स्त्वेकं समाम्नातं रुद्राणाममितौजसाम्' (वि. पु. १–१५.) इति । माध्वास्तु, 'यः दुदयपश्चादस्तमयात्मको वसुभोगकालः स दक्षिणोदयादिकालापेक्षया द्विरावृत्त, एव उत्तरोत्तरस्मात् द्विगुण' इति व्युत्क्रमेण योजयन्ति; अखिलमपि फलकालमेकस्मि घटयन्तीत्यलं बहुना ।

३—९.

अथ यच्चतुर्थममृतम्, तन्मरुत उपजीवन्ति सोमेन मुखेन; न वै
ऽश्नन्ति, न पिबन्ति; एतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥; त एत-
मभिसंविशन्ति; एतस्माद्रूपादुद्यन्ति ॥ २ ॥
स य एतदेवममृतं वेद, मरुतामेवैको भूत्वा सोमेनैव मुखेनैतदेवा-
ृ तृप्यति; स एतदेव रूपमभिसंविशति; एतस्माद्रूपादुदेति ॥ ३ ॥
स यावदादित्यः पश्चादुदेता पुरस्तादस्तमेता, द्विस्तावत्, उत्तरत
दक्षिणतोऽस्तमेता, मरुतामेव तावदाधिपत्यँ स्वाराज्यं पर्येता ॥ ४ ॥

इति तृतीयाध्याये नवमः खण्डः

३—१०.

अथ यत् पञ्चमममृतम्, तत् साध्या उपजीवन्ति ब्रह्मणा मुखेन,
ना अश्नन्ति, न पिबन्ति; एतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥; त
रूपमभिसंविशन्ति; एतस्माद्रूपादुद्यन्ति ॥ २ ॥
स य एतदेवममृतं वेद, साध्यानामेवैको भूत्वा ब्रह्मणैव मुखेनैतदे-
ष्ट्वा तृप्यति; स एतदेव रूपमभिसंविशति; एतस्माद्रूपादुदेति ॥ ३ ॥
स यावदादित्य उत्तरत उदेता दक्षिणतोऽस्तमेता, द्विस्तावत्, ऊर्ध्वं
र्वागस्तमेता, साध्यानामेव तावदाधिपत्यँ स्वाराज्यं पर्येता ॥ ४ ॥

इति तृतीयाध्याये दशमः खण्डः

---

[1]एवं वसुरुद्रादित्यमरुत्साध्यगणभोग्यरोहितादिपञ्चरूपात्मकपञ्चामृताश्रय देव-
पेत ज्योतिर्मण्डलाख्यरूपयुक्तस्य उदयास्तमयादिकृत्यविशिष्टस्य आदित्यनाम-

ख. कोशे अथयच्चतुर्थमित्यादि । पूर्ववत् । अथ यत् पञ्चममित्यादि । सर्वं समानम् इति ।

र्ध्वं उदेताऽर्वागस्तमेतेति । वस्वादीनां प्रागादिदिक्षु स्थितानां स्वस्वदिशि समीपे
प्राथमिकदर्शनम् तदा तदुदयप्रतीतिवत्, उपरिस्थितानां साध्यानामूर्ध्वस्वदेशसमी-
ृ प्राक् केनापि कारणेन नियमेन सूर्यस्यादर्शने सति समीपदेश एव चेत् प्रथमं तद्दर्शनम्,
मेव तदुदयो भवति, अथ तदूर्ध्वदेशाद्दूरतो गते अर्वागस्तमयप्रतीतिः । तथाच
गकालः उत्तरोदयदक्षिणास्तमयान्तरालात्मको यावानध्यवसितः, तावानेव द्विगुणीकृतः
र्वागस्तमयान्तरालेषु यावत्सु आवर्तितेषु सिध्यति, तावान् साध्यानां भोगकाल इति ।

:

## ३—११.

**अथ तत ऊर्ध्वं उदेत्य नैवोदेता नास्तमेता, एकल एव मध्ये स्**

कस्य आदित्यशरीरककार्यावस्थब्रह्मण उपासनमुपदिश्य, नामरूपकृत्यादिरहित वस्थादित्यजीवशरीरकब्रह्मोपासनं दर्शयति **अथ तत ऊर्ध्वं** —। अथ वसुरूपस्य कलस्य समाप्त्यनन्तरं **तत ऊर्ध्वं उदेत्य** उदयास्तमयाभ्यां महादूर्ध्वं उदेत्य-उदयास्तमयकृत्य [प्रयुक्त] प्राण्यनुग्रहरहित इत्यर्थः—**नैवोदे** स्थाता । उदयास्तमयशून्यः एकस्वभाव एव उदासीनतया वर्तत इत्यर्थः ।

**अथ तत ऊर्ध्वं** इति । ननु किमिति कार्यावस्थादित्यपरतयैवेदं वाक्यमपि न यं अत्र **मध्ये स्थाता**ति गतिनिवृत्तिवाचिस्थाधातुप्रयोगेण' आदित्यस्य वस्तुतो भ्रमणमेव उदयास्तमयवर्णनं प्रातीतिकमात्रम्'इति पक्षस्यात्र वर्णनप्रतीतेः । यद्वा तद्भ्रमणपक्षस्यैव कत्वेऽप्येवमर्थः सुवचः । यौ खलूदयास्तमयौ नाना प्रागुक्तौ, तौ परिभ्रमतः कार्यावस्थस स्यैव वस्तुनो न स्तः इति । तदुक्तं विष्णुपुराणे, 'दिवसस्य रविर्मध्ये सर्वकालं व्यव 'नैवास्तमय(न)मर्कस्य नोदयः सर्वदा सतः । उदयास्तमयाख्यं हि दर्शनादर्शनं रवेः' ( इति । तदयं श्रुत्यर्थः—**तत ऊर्ध्वः** तत्तद्दिगूर्ध्वप्रदेशावच्छिन्नः **उदेत्य** उपर्यागत्य एक **मध्ये** दिवसस्य मध्ये स्थाता (सर्वदा यत्र क्वापि देशे मध्याह्न इव दीप्यमानतया विरदि ष्णत्वादि विना सदा तिग्मसहस्ररश्मित्वरूपैकस्वभाव एवेति यावत्) । नोदेति, नास्तमे वस्तुत इति । अत्रोच्यते—एवं तर्हि तदुपबृंहणानुसारादेवमेव कस्मान्न श्रुत्यर्थ इष्यते, तत्रैव (२-११), 'नोदेता नास्तमेता च कदाचिच्छक्तिरूपधृत् । विष्णुर्विष्णोः पृथक् तस् सप्तविधोऽप्यय 'मिति । अत्र हि **नोदेता नास्तमेते**ति सम्यगियं श्रुतिः प्रत्यभिज्ञ तदयं श्रुत्यर्थः—य एतावदुदयास्तमयशाली आदित्यो वर्णितः, तत **ऊर्ध्वं परमपदे** परवासुदेवो विष्णुरादित्यादुत्कृष्टः तत इहाविर्भूतः आदित्यमण्डलगतादित्यतत्परिकरवत् प्र मागमानायौ न प्राप्नोति, किन्त्वेकल एव सर्वदा आदित्यमण्डलेऽवतिष्ठत इति । आदर्तु यमर्थः; मधुविद्यायाः संप्रति साक्षाद् भगवद्विषयकतया ब्रह्मविद्यात्वस्याऽऽञ्जस्येन संपत्ते च श्रीभाष्यविरोधोऽपि । तत्र, 'आदित्यान्तरात्मतयाऽवस्थितं कारणावस्थमेव ब्रह्म' इत्येत तात्पर्यात । आदित्यमण्डलान्तर्वर्ती हिरण्मयः पुरुषः कारणावस्थः ; तदधिष्ठितः तच्छक्त्याप्या आदित्यस्तं प्रति कार्य एवेति प्राक् कार्यावस्थादित्य उक्त इति सुनिर्वहत्वादिति ॥ अस्तु त श्रुत्यर्थः, किमिति सृष्टिप्रागवस्थादित्यजीवपरतया मुख्यवस्थजीवपरतया वा व्याख्यानमिति पूर्वं यद्रूपौ उदयास्तमयौ प्रस्तुतौ, तद्रूपयोरेव तयोरिह **नोदेता नास्तमेते**ति निषेधप्रति सति संभवे स्वीकर्तुं युक्तम्; न त्वनुपस्थितयोरन्यादृशयोः । प्रस्तुतौ च दर्शनविशेषरू दर्शनविसहपोऽस्तमयश्च । तन्निषेधश्च तादृशादित्यजीवपरतयामेवेत्याशयादित्यलमधिके

ोकः —

अत्र हि भाष्ये, [भाष्ये, 'अत्र हि ?] 'कार्यकारणावस्थब्रह्मोपासनं विधि-
ासौ वा आदित्यो देवमधु इत्यारभ्य, अथ तत ऊर्ध्व उदेत्य इत्यतः
ादित्यवस्वादिकार्यविशेषावस्थं ब्रह्म उपास्यमुपदिश्यते । अथ तत ऊर्ध्व
ादिना आदित्यान्तरात्मतयाऽवस्थितं कारणावस्थमेव ब्रह्मोपदिश्यते' इत्यु-
तत्र अथततऊर्ध्वउदेत्येत्यस्य मुक्तावस्थादित्यान्तर्यामिब्रह्मोपासनपरत्वे
ादिस्वारस्यात् कारणावस्थमिति भाष्यस्य अकार्यावस्थं, मुक्त्यवस्थमित्यर्थ
ः। न तु आदित्यभावप्राप्तिपूर्वावस्था। व्यासार्यैस्तु — भाष्यस्वारस्य-
। आदित्यनामरूपभाक्त्वावस्थापूर्वभाव्यवस्थैव अथततऊर्ध्वउदेत्येत्यादिसंद-
ोऽभिधस इति वर्णितम्। तेषामयमाशयः --- अथशब्दो न निर्दिष्टानन्त-
अपितु [1]अर्थान्तरप्रस्तावार्थः। 'अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेता
व मध्ये स्थाता' इत्यस्यापि उदयास्तमयतत्कार्यशून्यत्वमर्थः[2]। तच्चाऽऽदित्य-
वस्थायां कल्पादौ संभवतीति।

तदेष श्लोकः। तत् तस्मिन् विषये देवान् प्रति केनचित् योगिना गीतः

. कारणावस्थालक्षणगुणान्तरप्रस्तावार्थः क. उपासनान्तरप्रस्तावार्थः घ. ग. 2. ख.
. 'शून्यत्वमर्थः' इति। क कोशे तु 'शून्यत्वमात्रमर्थः। न तु ततउदेत्येतत्स्वारस्य-
ग्यम्' क.।

ाथशब्दादिस्वारस्यादिति। अथशब्दस्य पूर्वोक्तानन्तर्यं मुख्यार्थः। पूर्वसंदर्भे च
उदयास्तमयमध्ये देवगणानां तदनुभव उक्तः। एवञ्च स्वकर्तव्यदेवादिप्राणिजातानुग्रहा-
ध्यर्थस्यैव लाभात्, आदित्यावस्थाप्रागभावावस्थाग्रहणे तदानन्तर्यं दुर्घटम्। एवं ऊर्ध्व
े पदस्वारस्यमपि प्राणिजातानुग्रहोत्तरकालग्रहणे। ऊर्ध्वं प्रागिति पदयोर्मध्ये ऊर्ध्वपद-
ाउत्तरार्थे प्रागित्यस्य पूर्वकालरूपार्थे च प्रयोगस्य व्यवस्थितत्वात्। श्रुतप्रकाशिकारीतौ
णावस्थमिति भाष्यपदस्वारस्येऽपि नैतच्छ्रुतिस्वारस्यम्। स्वपक्षे च नातीव भाष्यस्वा-
ः। मुक्तेरात्यन्तिकलयरूपत्वात्, लयस्य च स्वकारणे एव वक्तव्यत्वात्, मुक्त्यवस्थं ब्रह्म
कारणावस्थतया सुवचमिति। अन्यथा मुक्त्यतिरिक्तावस्थाग्रहणे तस्या अनित्यत्वेन एक-
ारस्याच्च। अत एवास्मद्भाष्यानुसारिणि श्रीकण्ठभाष्ये कारणावस्थपदसद्भावेऽपि मुक्तविषय-
ाप्यदीक्षितयोजना। शून्यत्वमिति। उदयास्तमयध्वंसरूपार्थो न ग्राह्यः; किन्तु
तस्तदभाव। स च प्राक्कालेऽपि सुवच इति भावः। देवान् प्रति इति। अस्य
ानस्य देवातिरिक्तं कञ्चित् पुरुषं प्रति प्रवृत्तत्वे देवा इति संबोधनं क्लिष्टं नेयं

न वै तत्र स[1] निम्लोच नोदियाय कदाचन ।
देवास्तेनाहँ सत्येन मा विराधिषि ब्रह्मणा ॥ इति ।

न ह वा अस्मा उदेति, न निम्लोचति । सकृद्दिवा हैवास्मै य एतामेवं ब्रह्मोपनिषदं वेद ॥ २ ॥

तद्धैतत् ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजा॰

1. न निम्लोच शां॰ न निम्लोचो मा॰

---

श्लोकः । उच्यत इति शेषः । न वै — ब्रह्मणेति । हे देवाः ! तत्र आदित्यभावमुक्तिकाले सः मुक्तादित्यान्तर्यामी परमात्मा न निम्लोच नास्त नोदियाय नोदितश्च । तेन सत्येन[1] वचनेन, ब्रह्मणाऽहं मा विराधिषि[2] न गच्छामि, अप्राप्तिं न गच्छामीति यावत्[3] । निम्लोचेति छान्दसो द्विर्वचना॰

न ह — वेद । य एतां मधुविद्यारूपां ब्रह्मोपनिषदं ब्रह्मविद्यां अनुतिष्ठति, अस्मै[4] ब्रह्मविदे आदित्यो नोदेति, नास्तमेति । आदित्योदय शाभ्यां न किञ्चित् तस्य प्रयोजनमित्यर्थः । कुत इत्यत आह सकृद् — ब्रह्मविदे सकृद् दिवैव भवति । सकृदुदितमहरेव भवति । सदैवाहर्भवतीत्य संततं सर्वविषयकसाक्षात्कारोऽस्य भवतीत्यर्थः ।

मधुविद्यासंप्रदायमाह — तद्धैतत् — प्रजाभ्यः । तद् ह एतत्

1. सत्येन वचनेन क. ख. । क. कोशे, 'यद्यसत्यं मयोक्तं स्यात्, तर्हि न प्राप्नुयामिति भावः' इत्यप्यधिकम् । वचनेनेत्येतत्स्थाने 'निर्विकारेण' इति सत्यशब्दा॰ ब्रह्मविशेषणं ग. घ. कोशयोः । 3. विरोधं न गच्छामीति यावत् ख. ग. 4. तस्मै

---

स्यादिति तादृशशाङ्करमार्गे उपेक्षितः । शाङ्करे, न निम्लोचेति पाठः । न वै तत्रेति पृ कृयम् । तद्विवरणं न निम्लोचेत्यादि । निम्लोच—निमुम्लोच । ननु सूर्यस्य सर्वथैवाभावा कार एव स्यात् ; कथमहरेव सर्वदेत्यत्र सकृद्दिवाशब्दतात्पर्यार्थमाह संततमित्यादि उदयास्तमयपदयोर्दर्शनादर्शनपरत्ववत् दिवापदमपि दर्शनपरमेव । तत्र सूर्योदयादिशब्दः दर्शनादिपरः । दिवाशब्दश्च पदान्तरासमभिव्याहारादविशेषात् सर्वदर्शनपर इति ॰

द्वैतदुद्दालकायारुणये ज्येष्ठाय पुत्राय पिता ब्रह्म प्रोवाच ॥ ४ ॥
दं वाव तज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात् , प्रणाय्याय वाऽन्ते-
॥ ५ ॥; नान्यस्मै कस्मै चन ; यद्यप्यस्मा इमामद्भिः परिगृ-
स्य पूर्णां दद्यात् , एतदेव ततो भूय इति एतदेव ततो भूय इति ।

इति तृतीयाध्याये एकादशः खण्डः

---

र्थः ।[1] तद्धैतत् — ब्रह्म प्रोवाच । तद्धैतत् ब्रह्म उद्दालकाय पिता
। इदं — वासिने । तस्माद्धेतोः इदं ब्रह्मविज्ञानं ज्येष्ठाय पुत्राय वा
प्रणाय्याय योग्याय शिष्याय वा प्रब्रूयादित्यर्थः । 'प्रणाय्योऽसंमतौ'
ामार्थे प्रणाय्यशब्दस्य निपातितत्वात् । नान्यस्मै कस्मैचन । उक्तपुत्र-
रिक्ताय कस्मैचिदपि न ब्रूयादित्यन्वयः । यद्यपि — इति । अद्भिः
ां समुद्रावृतां भोगोपकरणैः पूर्णामिमां पृथिवीं यद्यपि अस्मै = आचार्याय
तदपेक्षयाऽप्येतद्विज्ञानमेवाधिकम् । नैतस्यानुरूपो निष्क्रयोऽस्तीत्यर्थः ।
— । द्विरुक्तिर्विद्यासमाप्त्यर्था ॥

तत्खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते — समन्वयाध्याये—
१) — मधुविद्यायाः वस्वादिगणभोग्यरोहितरूपादिपञ्चामृताश्रयादित्योपासना-
अस्यां विद्यायां वस्वादीनां नाधिकारः संभवति ; उपास्योपासकभावस्यै-
त्वात् । न हि एकस्यैव प्रीणनीयत्वं प्रीणयितृत्वञ्च संभवति । वसूनामेवैको
ना वसुत्वादिप्राप्तेरेव मधुविद्याफलत्वेन वस्वादीनामेव सतां वस्वादित्व[3]·
ाया असंभवाच्चार्थित्वाद्यसंभवात्[4] । 'तं देवा ज्योतिषां ज्योतिरायुर्हो-

ख. एतदुपरि, 'ब्रह्मा चतुर्मुखः । प्रजापतये दक्षाय । मनवे स्वायम्भुवाय' इति ।
र्थ. ख. 3. वस्वादित्व क. ख. 4. भवाच्च ग. घ.

---

ह्म मधुविज्ञानविषयं प्रजाभिरधिगतं ब्रह्म । पिता अरुणः ।
दित्योपासनारूपतयेति । तावन्मात्रोपासनरूपतयेत्यर्थः । ब्रह्मविद्यात्वाभावादिति
ादिभिरादित्यांशस्य भुज्यमानत्वेऽपि तदन्तःस्थब्रह्मणो भुज्यमानत्वाभावात् 'आदित्यो
इत्यत्रादित्यपदं न ब्रह्मपरम् । एवं, 'तद्रुसव उपजीवन्ति 'त्याद्युक्तोपजीवनकर्तृत्वस्य
वेन वस्वादिपदमपि शुद्धवस्वादिपरमेवेति भावः । ब्रह्मणोऽनुपास्यत्वे, 'सकृद्दिवा

पासतेऽमृतम्' इति परब्रह्मव्यतिरिक्तस्य देवोपास्यत्वनिषेधेन ज्यो[ति]ब्रह्मण्येवोपासन[1]सद्भावावगमाच्च मधुविद्यादिषु नाधिकार इति, "मध्व[ा]दिष्वसंभवादनधिकारं जैमिनिः", "ज्योतिषि भावाच्च" इति सूत्राभ्यां पूर्वप[क्षे कृते] "भावं तु बादरायणोऽस्ति हि" इति सूत्रेण सिद्धान्तः कृतः।

अस्यायमर्थः — अधिकारस्य सद्भावं बादरायण आचार्यो मन्यते। तेषामप्यर्थित्वादिसंभव इति। अयमाशयः — न हीयं विद्या वस्वादि[मात्र]पर्यवसिता; अपितु तच्छरीरकपरमात्मपर्यन्ता। वस्वादीनामेव सतां स्व[शरीरक]परमात्मोपासनं [2]संभवत्येव। न चोपास्यप्रतिपादकवस्वादिशब्दानां ब्र[ह्मपरत्वे] प्रमाणाभावः; उपसंहारे, "ब्रह्मोपनिषदं वेद" इति श्रवणात्। वस[्वादीनां] सतां कल्पान्तरे वसुत्वा[3]दिप्राप्तिपूर्वकब्रह्मप्राप्तेरुद्देश्यत्वसंभवाच्च। लोके [... ] सतां जन्मान्तरेऽपि पुत्रित्वेप्साया दर्शनात्।

1. पासनासद्भाव क. पासनसंभव ख. 2. भवत्येव ग. 3. वस्वादि क

हैवास्मै भवती'ति मुक्तिफलश्रवणं कथमिति चेत्—वस्वादिपदप्राप्त्यनन्तरं तत्रोपा[स]मानस्य तत् फलमिति क्रममुक्तिपरं तत्। यद्वा आदित्योपासनादादित्यसायुज्यं प्राप्तस्य [मध्य]लमध्य एव च स्थितस्य तददर्शनाभावात् सर्वदा दिवैवेत्यर्थसंभवाच्च मोक्षरूपक्रियार्थपरत[्वं] पूर्वपक्षाशयः स्यात्। ननु वस्वादिमात्रोपासने वस्वादिपदमपि दुर्लभम् — फलप्रा[प्तिका]ले मन्वन्तरे उपासितवस्वादेर्दातुरभावात् इति चेन्न—वस्वादिभोगसाम्यस्यैव फलत्वेनान्त[र्म]न्तरे तैस्तत्प्रदानसंभवात्। वस्वादित्वस्यैव फलत्वेऽपि, 'इन्द्राय ज्येष्ठाय पुरोडाशमे[कादशकपालं] निरवपन्महाव्रीहीणाम्; ततो वै स ज्यैष्ठ्यं देवानामभ्यजयत्' इत्येवमिन्द्रायुद्दे[शेन] इन्द्रादिपदप्राप्तेः श्रुततया तद्वत् वचनबलात् सत्रोपपत्तेः। फलस्य भगवदधीनत्वेऽपि तदर्थं वस्वाद्याराधनमिति। अतो वस्वादिप्रीतिरिहोद्देश्यम्। न च उपसंहारे ब्रह्मोपनि[षदिति] ब्रह्मविद्यात्वं श्रूयत इति वाच्यम्। प्रथमप्रतीतवस्वादिमात्रोपासनतया मनुष्यादिविषय[त्वेन] लब्धावकाशत्वेन तत्र ब्रह्मपदस्य वेदपरत्वादिति पूर्वपक्ष्याशयः। सिद्धान्त्याशयस्तु [ब्रह्मोपनिषद]मित्यत्र ब्रह्मपदस्य वेदपरत्वे तद्वैयर्थ्यात्, 'मा विराधिषि ब्रह्मणा' 'ब्रह्म प्रोवाच' [इत्या]द्यस्य ब्रह्मपदस्य मुख्यार्थग्रहणौचित्यात् उपासनस्य ब्रह्मविषयकत्वे अवगते, वस्तुतः फलस्य साक्षात् परम्परया वा परब्रह्मप्रीत्यधीनतया तस्यैतदुपासनाराध्यत्वावगमेन आदि[त्यादि]पदमविशेषात् विशिष्टवाचि। देवमधुत्वोपजीवितृत्वादिकं तु विशेष्ये बाधाद्विशे[षणे] प्रतर्दनविद्यादिष्विवेति।

ननु वस्वादिपञ्चगणोपजीव्यरोहितादिपञ्चरूपात्मकपञ्चामृताश्रयादित्यमधूपा-
सुविद्यायाः, तस्याश्च विद्यायामादित्यस्यैवोपास्यतया आदित्यस्य तद्विद्याधि-
ऽपि वस्वादीनां कथमनधिकारशङ्का। न ह्यस्यां विद्यायां वस्वादीनामुपा-
अपितु तद्भोग्यादित्यस्यैव। भाष्यकृता, "मधुविद्यायामृग्वेदादिप्रतिपा-
द्यस्य रश्मिद्वारेण प्राप्तस्य रसस्याश्रयतया लब्धमधुव्यपदेशस्यादित्यस्यां-
वादिभिर्भुज्यमानानामुपास्यत्वम्" इति पूर्वपक्षे, "वस्वादिभोग्यभूतादि-
विधीयमानमुपासनं तदवस्थस्यैव ब्रह्मण इत्यवगम्यते" इति सिद्धान्ते
। न हि स्वोपासनवत् स्वोपजीव्यत्वेनान्यस्योपासनं विरुद्धम्; तथासति
नोच्छेदप्रसङ्गात्। सर्वेष्वप्युपासनेषु उपास्यगतस्वोपाजीव्यत्वस्वसेव्यत्वस्वा-
न्तर्यामित्वादीनामनुसंधेयत्वात्। ततश्च वसूनामेव सतां स्वोपजीव्यपञ्चा-
दित्यविषयमधुविद्यानुष्ठानसंभवात् कुतोऽनधिकारशङ्केति चेत्—
उच्यते। 'वसूनामेवैको भूत्वे'त्यादिना वसुत्वादिप्राप्तेः फलत्वेन[1] कीर्तनेन
यां तत्क्रतुन्यायेन वस्वादीनामुपास्यत्वस्याप्यभ्युपगन्तव्यत्वात्। "अथ तत
देत्येत्यतः प्राक् आदित्यवस्वादिकार्यविशेषावस्थं ब्रह्म उपास्यमुपदिश्यते।
ऊर्ध्व उदेत्येत्यादिना आदित्यान्तरात्मतयाऽवस्थितं कारणावस्थं ब्रह्म उपा-
स्यत" इति कार्यावस्थोपासनदशायामादित्यवत्[2] वस्वादीनामप्यविशेषेणो-
भाषितत्वात्, "अस्ति ह्यादित्यवस्वादीनामपि स्वावस्थब्रह्मोपासनेन वस्वा-
पूर्वकब्रह्मप्राप्सासंभवः" इति आदित्यस्य वस्वादीनाञ्च तुल्यत्वस्य भाषित-
धुविद्याया आदित्योपासनत्व पञ्चामृतोपासनत्व वस्वाद्युपासनत्वरूपाकारत्रय-
पूर्वपक्षोत्थित्यनुपपत्तिरिति द्रष्टव्यम्।

ननु वस्ववस्थस्य ब्रह्मण उपास्यत्वसंभवेऽपि तद्रसम् उपजीवन्तीति
उपजीवितृत्वलक्षणं भोक्तृत्वं न ब्रह्मणः संभवतीति चेन्न — उपजीवितृत्व-

1. फलत्वादिकीर्तनेन ख. फलत्वेन कीर्तितत्वेन घ. 2. अयं घ. पाठः। क. ग. आदित्यवस्वादीनामविशेषेणेति। ख. कोशे तु आदित्यवदित्यारभ्य भाषितत्वाच्चेत्येतत्स्थाने, 'आदित्यवत् वस्वादीनाञ्च तुल्यत्वस्य भाषितत्वाच्च' इत्येव।

प्तस्यापि फलस्य पुनःप्रेप्साया आनुभविकत्वात्, स्वस्य वस्वादेः रुद्रादिभावानुभाव्यफलान्त-
स्वानाराध्यत्वमेव पूर्वपक्षे मुख्ययुक्तिः, न फलस्य प्राप्तत्वमित्याशयेन शङ्कते नन्विति।

स्यापि सद्वारकतया तत्र संभवात्। नन्वेवं, तद्वसव उपजीवन्तीत्यत्र वसुश
तदन्तर्यामिपरत्वे वसूनामेवैकोभूत्वेत्यत्रापि वसुशब्दस्य [1]वस्ववस्थब्रह्मपरत्वं
न च तद् युक्तम्; न ह्युपासकस्य[2] जीवस्य कल्पान्तरे वसुत्वप्राप्तिलक्षणसंसार
वस्ववस्थब्रह्मभावोक्तिः संगच्छत इति चेन्न—'वसूनामेवैकोभूत्वे'त्यत्र य
बाधकाभावेन, ब्रह्मपरत्वे बाधकसद्भावेन[3] च यथाश्रुतार्थस्यैवोपपन्नत्वादित्यलमति

ननु, 'वसूनामेवैको भूत्वा', 'सकृद्दिवा हैवास्मै भवति' इति वाक्
नुसारेणानया विद्यया कल्पान्तरे कञ्चित् कालं वसुभावं प्राप्य पश्चाद् ब्रह्म
तीत्यभ्युपगमो न युक्तः। तथासति इदानीं मधुविद्योपासकानां प्रायण
फलप्राप्तिर्न स्यात्। कल्पान्तरभावित्वात् वसुत्वस्य। न च स विलम्बः
एवेति वाच्यम्—कल्पान्तरेऽपि वस्वादिभावप्रापकमधुविद्यानिष्ठानां तत्प्राप
न्तरनिष्ठानाञ्चानन्तानां संभवेन सर्वेषां[4] युगपद्वस्वादिभावे वसुगताष्टत्वसंख्या
प्रसङ्गेन, 'वसुत्वप्रापककर्मनिष्ठानामनन्तानां मध्ये विपाकानुसारेण केषाञ्चित्
रकल्पमध्ये वसुत्वादिप्राप्तिर्भवति; केषाञ्चित् अनुष्ठितमधुविद्यानामपि सहस्र
प्रतीक्षणमप्यस्ति' इत्यभ्युपगन्तव्यम्। न हीदृशः कश्चिन्मुमुक्षुर्भवति। सहस्र
पर्यन्तविलम्बमभ्युपगच्छतः कथं मुमुक्षुता? हैरण्यगर्भान्तसकलभोगविरक्तिपूर्वक
नन्दप्रेप्सालक्षणमुमुक्षाशाली हि ब्रह्मविद्यायामधिकरोति; [5]वस्वादिपदाभिल
कथं मुमुक्षुता; कथं[6] ब्रह्मविद्याधिकार इति चेत्—

सत्यम्। ब्रह्मानन्दैकप्रेप्सुरेव मुमुक्षुः। अथापि यथा देहावसानकाले
नन्दैकप्रेप्सा मुमुक्षा, एवम्, 'वसुत्वावसाने ब्रह्मैव प्राप्नवानि' इति प्रेप्

1 ख. ग. कोशयो. वस्वव[स्थे]ति न। 2. उपासकस्यापि ग. 3. यथाश्रुते
भावेन ब्रह्मपरत्वे बाधकसंभवेन ख 4. सर्वेषाञ्च ख. 5 ततश्च वस्वादि ख. 6 कथं

**यथाश्रुते बाधकाभावेनेति**। तस्य वाक्यस्य फलपरत्वेनोपासनाकारसमर्पकत्वाभ
निवेशाभावादिति भावः। **ब्रह्मपरत्वे बाधकं** षष्ठीबहुवचनोक्तं बहुत्वं निर्धारणञ्च भा. प्र
**न्यायरक्षामणि शिवार्कमणिदीपिको**क्तमालोच्य तत्रास्माकं हेयोपादेयवि
विस्तरं करोति **ननु वसूना**मित्यादिना। **कर्मनिष्ठाना**मिति। **कर्म** मधुविद्याऽपि अन्यद

प्रेप्सा भवत्येव । शास्त्रबलाच्चेदृशविलम्बसहिष्णवोऽप्यधिकारिणः सन्ती-
त्यम् । तत्र च प्रारब्धवैचित्र्यमेव नियामकम् । अत एव—

'याथातथ्यं स्वपरनियतं यच्च दिव्यं पदं तत् ।
काराकल्पं वपुरपि विदन् कस्तितिक्षेत बन्धम् ॥'

॥ विवेकिनः कथं विलम्बसहिष्णुता—इत्यप्यपास्तम् । प्रारब्धमहिम्ना सर्वस्या-
।

स्तुतस्तु, 'भ्रातॄणां मध्ये त्वमेकः' इति लौकिकोक्तेः भ्रातृभोगसाम्याभि-
, 'वसूनामेवैको भूत्वे' त्यस्य', 'किञ्चित्कालमानुषङ्गिकवस्वादिभोग-
्य तेन पथा परं ज्योतिरुपसंपद्यत' इत्यभिप्रायत्वात् तादृशभोगसाम्यस्य च
नन्तरमेव संभवान्नानुपपत्तिरित्यप्याहुः ॥

(२) ननु वस्वादिदेवतानां विग्रहाभावेनोपासनसामर्थ्यासंभवात् कथमुपासनाधि-
। हि देवादीनां शरीरवत्त्वे प्रमाणमुपलभ्यते । न तावत् प्रत्यक्षानुमाने ;
गोचरत्वात् । नापि, 'वज्रहस्तः पुरन्दरः', 'तेनेन्द्रो वज्रमुदयच्छत्'
प्रामाण्यम् ; मन्त्रार्थवादानामनुष्ठेयार्थस्मृति—स्तुतिप्रयोजनकतया विग्रहादौ
वेन तात्पर्याविषये शब्दस्याप्रामाण्यात् । अन्यथा श्वेतवर्णरजककर्तृकवस्त्र-

इत्यस्य च वाक्यस्य स्व.

---

रब्धमहिम्नेति । उक्तं हीदमप्याचार्यैः, 'नियत्या वैयात्यं नियमयितुमेवं प्रभवति'
त्यप्याहुरिति । शिखामणिदीपिकायां 'वस्वादिभोगसाम्यं पूर्वपक्ष्यभिमतम् ; वस्वादि-
द्धान्त्यभिमतम्' इति व्यवस्थाकरणममूलमनपेक्षितश्चेतीह दर्शितं भवति । वस्वादि-
ऽपि पूर्वपक्षसंभवस्य प्राग् दर्शितत्वात् । मधुविद्याया अंशतोऽनुष्ठाने मानाभावेन एत-
त्र वसुरुद्रादित्यभावप्राप्तेरुत्तरोत्तरद्विगुणकालानुभाव्यायाः फलत्वेन तावल्लाभस्य वस्वादि-
पक्ष एवैकस्मिन् कल्पे स्वरसत्वात् । 'अहैव भवती'तिवत् 'वसूनामेक एव भवती'
हाच्च । अत्र किञ्चित्कालमानुषङ्गिकेत्यनेन एतन्मन्वन्तरात् प्राक् मधुविद्यानिष्ठो
स्मिन् पूर्णकालं फलमनुभवति यथा, तथा एतन्मन्वन्तरमध्ये एतन्निष्ठः अत्र मन्वन्तरे
कालोऽवशिष्टः, तावति काले पूर्ववदेकत्रिंशदंशात्मना विभक्ते सर्वमवान्तरं फलमनुभूय
तदिदमपूर्णत्वं न तदनिष्टम्, तथा ज्ञात्वैव तेन तदनुष्ठानात् । अस्याप्रधानफलत्वादिनि
। आहुरित्यनेन, 'इदानीं वसूनामेव सतां कल्पान्तरे वस्वादित्वप्राप्तिश्चे'ति भा
स्मिन् पक्षे क्लिष्टमक्लिष्टं वेति विमृश्यमिति सूच्यते । अत्र भाष्ये एकत्र आदिपद-
एकस्मिन् कल्पे वस्वाद्यनेकतापत्तिप्रदर्शनात् भोगसाम्यमभिमतं स्यादिति ।

शोधनतात्पर्येण प्रयुक्तस्य, 'श्वेतो धावति' इत्यस्य शुनकसमीपगमनप्रतीत्युत्प त्वसंभवमात्रेण तत्रापि प्रामाण्यप्रसङ्गात् ।

ननु रेवत्याधारवारवन्तीयसामसाध्याग्निष्टोमस्तोत्रविशिष्टक्रतुविधायके, तीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत' इति वाक्ये, 'रे वारवन्तीयम्' इत्यंशस्य, 'रेवतीर्नस्सधमाद' इति ऋक्त्रयाधारवारवन्तीयस अग्निष्टोमस्तोत्रविशेषणे, तात्पर्याभावेऽपि, प्रामाण्यं दृष्टम् । न हि तद् विशे 'सोमेन यजेत' इत्यादिविशिष्टविधिषु सोमलतादिविशेषणवत्, लोकसि नापि विधिसिद्धम्; 'कवतीषु[1]रथन्तरं गायेत्' इतिवत्, रेवतीषु वार गायेदिति विध्यदर्शनात । न चास्यैव विशिष्टगोचरस्य विधेर्विशेषणविधावपि वक्तुं शक्यम्—विध्यावृत्तिप्रसङ्गात् । न चाऽऽक्षेपाद् विशेषणप्रसिद्धिः—अ न्याश्रयात् = विशेषणप्रसिद्धौ सत्यां विशिष्टविधिः, विशिष्टविधिनैव विशेषणप्र इति परस्पराश्रयापत्तेः । तस्माद् विशिष्टविधेर्विशेषणस्वरूपे तात्पर्याभावेऽपि तीषु वारवन्तीय'मिति पदद्वय समभिव्याहारस्यैव प्रामाण्यमभ्युपगन्तव्यमिति चे

मैवम् । रेवतीषु वारवन्तीयमिति पदद्वयसमभिव्याहारलभ्यां रेवत्याधार न्तीयप्रतीतिमुपजीव्य प्रवृत्तेन विशिष्टविधिना आक्षिप्तस्य 'रेवतीषु वार कुर्यात्' इति विशेषणविधेरेव तत्र प्रमाणत्वेन, रेवतीषु वारवन्तीयमिति प समभिव्याहारस्याप्रमाणत्वात् । इयांस्तु विशेषः—'सोमलतादि विशेषणं न्तरसिद्धं सोमपदात् प्रतीयते । इह तु मानान्तरासिद्धमेव पदसमभिव्या प्रतीयत' इति । प्रतीयमानेऽपि विशेषणे विशिष्टविधेः प्रामाण्याभावः उभयत्र विशिष्टः । ततश्च यथा सोमप्रत्यायकं सोमपदं[2] न सोमस्वरूपे प्रमाणम्,

1. कवतीषु इति घ. पाठः मीमांसकप्रसिद्धश्च; न्यायरक्षामण्यनुसारी च । अन रेवतीषु इत्येव पाठः । 2. सोमपदम्, यथा च न सोम क.

---

**आक्षेपादिति** । तद्विशेषणविशिष्टकिञ्चिद्विशेष्यविधानं तस्य विशेषणस्याप्रसिद्धौ नो इत्यन्यथानुपपत्त्येत्यर्थः ।

**मैवमिति** । अयं भाव. — विशेषणस्य प्रतीत्यभावे विशिष्टविधानासंभ समभिव्याहारस्य विशेषणप्रतीतिजनकत्वेऽपि न तत्प्रमाजनकत्वरूपं प्रामाण्यम्, विशेषणसत्ताधीनत्वात् । रेवत्याधारकवारवन्तीयरूपविशेषणस्य च विशेषणविधिकल्पनाधीन

वारवन्तीयमितिपदद्वयसमभिव्याहारो रेवतीवारवन्तीयरूपविशेषणरूपार्थे-ऽपि न तत्र प्रमाणम् । अयञ्चापरो विशेषः—सोमलताद्रव्यस्य लोकसिद्ध-त्र यागसंबन्धित्वेनैव विधिः कल्प्यः; इह तु [ रेवतीवारवन्तीयरूप ] विशेष-स्यापि मानान्तरासिद्धत्वात् प्रतीयमानेऽपि तस्मिन् विशिष्टविधेः प्रामाण्याभावाच्च र्थे स्वरूपे, स्तोत्रविशेषसंबन्धित्वे च विधिद्वयं कल्प्यमिति ।

तस्मान्मन्त्रार्थवादानां स्वार्थे तात्पर्याभावात् न तेभ्यो देवताविग्रहसिद्धिः ।

ननु मन्त्रार्थवादानां विध्येकवाक्यतापन्नानां स्वार्थेऽप्यवान्तरतात्पर्यं संभव-दर्शपूर्णमासादिप्रधानविध्येक[1]वाक्यतापन्नप्रयाजादिविधिवत् इति चेत् —

सत्यम् । मानान्तराविरोधे प्रतीयमानार्थे तात्पर्यं संभवति; न तु तद्विरुद्धे । , 'यजमानः प्रस्तरः' इत्यत्रापि प्रतीयमानाभेदे तात्पर्यप्रसङ्गात् । अस्ति र्थवादवशेन देवताविग्रहाभ्युपगमे मानान्तरविरोधः । देवताविग्रहाभ्युपगमे यतौल्येन नानायागदेशे युगपदाहूतानामागमनस्य, अग्निप्रक्षिप्तभस्मीभूतहविः-देरपि अभ्युपगमात् प्रत्यक्षोपपत्तिविरोधः । अतो न देवताविग्रहे तात्पर्यं । ।

अतो विग्रहाभावादुपासनास्वनधिकार इति पूर्वपक्षे प्राप्ते—उच्यते—

"तदुपर्यपि बादरायणः संभवात्" । तत् ब्रह्मोपासनम् उपरि मनुष्या-ऽ देवादिष्वपि संभवतीति भगवान् बादरायणो मन्यते । तेषामप्यर्थित्व-

1. विध्येकतापन्न ख.

---

न्वात् विशेषणविधिरेव तत्र प्रमाणमिति । **प्रत्यायकोऽपीति** । रेवतीष्विति सप्तम्याः भाक्तित्वेन क्रियान्वयेऽपि सर्वत्र सप्तम्यर्थाधिकरणत्वस्य क्रियायां कर्तृकर्मान्यतरद्वार-रेवत्याधारकवारवन्तीयप्रतीतिरिति भावः ।

**स्वरूपे** इत्यन्तेनाधिकं विधिं प्रदर्श्य सोमेनयजेतेत्यत्रत्यविशेषणविधितुल्यं विधिं **स्तोत्रविशेषसंबन्धित्वे चेति** । अत्र परमसिद्धान्ताशयस्तु विशेषणं द्विविधं नकर्तव्यत्वावगमसिद्धानुष्ठानायत्तात्मलाभम्, अग्नये पावकायेतिवत्, स्वतःसिद्धश्चेति । पि स्वतःप्रामाण्यवादिनां समभिव्याहारजन्यज्ञानस्य प्रमात्वसिध्या प्रामाण्यं तस्याक्षतम् । विधिस्तु कर्तव्यतामात्रबोधक इति । तदिदं **प्राप्तिविरोधयोरसतोरि**त्युपसंहारेऽनुसं-**तस्मादिति** । यस्मिन्नर्थे यस्य तात्पर्यं नास्ति, तस्मिन्नर्थे तस्याप्रमाणत्वादित्यर्थः ।

सामर्थ्ययोः संभवात् । अर्थित्वं तावत् आध्यात्मिकादि[1]दुर्विषहदुःखाभि परस्मिन् ब्रह्मणि च निरस्तनिखिलदोषगन्धे अनवधिकातिशयासंख्येयकल्याण निरतिशयभोग्यत्वादिज्ञानाच्च संभवति । सामर्थ्यमपि पटुतरदेहेन्द्रियादिमत्तय वति । देहेन्द्रियादिमत्त्वञ्च सर्वेषु सृष्टिवाक्येषु देवतिर्यङ्मनुष्यस्थावरात्मना विधसृष्ट्याम्नानात् सिद्धम् । देवादिभेदश्च तत्तत्कर्मानुगुणब्रह्मलोकप्रभृति लोकस्थभोगयोग्यदेहेन्द्रियादियोगायत्तः । तथा, 'देवत्वं गच्छन्ति, र उपयन्ति' इति देवत्वप्राप्त्यर्थक्रतुविध्यन्यथानुपपत्त्याऽपि देवताविग्रहवत्त्वा ज्योतिष्टोमादिविध्यन्यथानुपपत्त्या [2]देशान्तरदेहान्तरभोग्य — ऐहिकसुख[3]वि स्वर्गशब्दोक्तसुखरूपतत्फलभोक्तृ[4]कर्मदेवसिद्धेरभ्युपगतत्वात् । देवतासायुज्य वयादिफलकर्मविध्यन्यथानुपपत्त्या देवताविग्रहाणां तद्भोग्यभोगोपकरणाना गन्तव्यत्वाच्च ।

"विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्" । नन्वेवं[5] मन्त्रा दिभिर्देवताया विग्रहाभ्युपगमे कर्मणि विरोधः प्रसज्यते । बहुषु यागेषु ए कस्येन्द्रस्य विग्रहवतः, 'अग्निमग्न आवह', 'इन्द्र आगच्छ' इत्यादिना तस्य संनिधानानुपपत्तेर्विरोधः प्रसज्यते इति चेत्—तन्न— अनेकप्रतिपत्तेर्दर्श दृश्यते हि सौभरिप्रभृतीनां शक्तिमतां युगपदनेकशरीरप्रतिपत्तिः ।

"शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्" । मा भूत विरोधः । वैदिके तु शब्दे विरोधः प्रसज्यते । देवताविग्रहाभ्युपगमे हि हस्य सावयवत्वेनानित्यत्वात्, इन्द्रादेरर्थस्य विनाशादूर्ध्वं, प्राक् उत्पत्तेश्च— वाचिवैदिकशब्दानां सत्त्वे, शब्दस्यार्थेन औत्पत्तिकः संबन्धो न स्यात्; शब्द

1. आध्यात्मिकादिषु क. 2. घ. कोशे देशेत्यादि — नुपपत्त्येत्यन्तं 3. सुखलक्षण ख. ग. । 4. भोक्तृदेहसिद्धेः क. 5. नन्वेभिः क.

---

एता उपयन्तीति । पञ्चदशरात्रीरुपयन्ति ' पञ्चदशरात्रं सत्रमनुतिष्ठन्तीति अयश्च पञ्चदशरात्रः 'चत्वारः पञ्चदशरात्रा' इत्युक्तेषु प्रथमः ता म.ब्रा. २३.६.) । फलं 'देवत्वं गच्छन्ती'ति ।

, अनित्यत्वं स्यात् । ततश्च, " औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः "
तेपादितं शब्दार्थसंबन्धानां नित्यत्वं विरुध्येत इति चेत्— न । 'वेदेन
ाकरोत् सतासती प्रजापतिः', ' नामरूपञ्च भूतानां कृत्यानाञ्च प्रपञ्च-
दशब्देभ्य एवादौ देवादीनां चकार सः' इति प्रत्यक्षानुमानशब्दि-
तिस्मृतिभ्यामिन्द्राद्यर्थानां वेदप्रभवत्वावेदनात् । यथा शिल्पिना शिल्प-
[नाम] रूपाद्यनुसंधानपूर्वकं निर्मितं देवताप्रतिमादिकं पूर्वपूर्वसमानरूपम्,
र्थोऽपि वेदोक्तनामरूपानुसंधानशालिना प्रजापतिना निर्मीयमाणः पूर्वपूर्व-
रव भवति । ततः समानरूपाभिव्यङ्ग्याकृतिवाचित्वादिन्द्रादिशब्दानाम्,
नेत्यत्वेऽपि जातिवाचिगवादिशब्दवत् इन्द्रादिशब्दानामपि जातिवाचि-
यार्थसंयोगकृतो विरोध इत्यर्थः ।

नु, ' मन्त्रकृतो वृणीते' , ' संहिताकारपदकारसूत्रकारब्राह्मणकाराणाम् ,'
त्रस्य सूक्तं भवति ' इति मन्त्रादीनां कार्यत्वश्रवणाच्च वेदानित्यत्वमित्य-
" अत एव च नित्यत्वम् " । ' अनादिनिधना ह्येषा वागुत्सृष्टा स्वय-
आदौ वेदमयी दिव्या यतः सर्वाः प्रसूतयः ' इति मन्त्रकृत्त्वेन प्रसिद्धा-
ात्तविश्वामित्रादीनां वेदजन्यत्वाम्नानात् मन्त्रकृत्त्वं मन्त्रद्रष्टृत्वमेव, न तु
ामित्यवसीयते । अतो वेदनित्यत्वस्य नानुपपत्तिः ।

न्वेवमपि शब्दस्य तदुपादानभूताहङ्कारादेश्च नष्टत्वात् कथं वेदनित्यत्वम् ?
वैषां वेदशब्दप्रभवत्वम् ? तत्राऽऽह " समाननामरूपत्वाच्चाऽऽवृत्तावप्यवि-
नात् स्मृतेश्च " । कृत्स्नोपसंहारे जगदुत्पत्त्यावृत्तावपि पूर्वोक्तसमाननामरू-

शब्दाभ्यां क. ख. 2. करत्वं ख.

त्पत्तिकः सहजः, सांसिद्धिकः, नित्य इति यावत् । **रूपाभिव्यङ्ग्याकृतीति** ।
म् । अस्मन्मते तदतिरिक्ताकृतेरभावेऽपि मीमांसकादिभिस्तदतिरिक्तनित्यजातिरूपा-
( तान् प्रति तथैवोक्तिः । **न वेदनित्यत्वमि**ति । ननु पूर्वपक्षिणो मीमांसकस्यापि
मेष्टमिति कथं तेन वेदनित्यत्वाक्षेपः, कथञ्च सूत्रे तान् प्रति वेदनित्यत्वस्थापनमिति न
अर्थवादानां वाच्यार्थे तात्पर्यमिच्छतस्ते मन्त्रकृत्त्वसंहिताकारत्वाद्यर्थवादार्थेऽपि तात्पर्य-
ा वेदनित्यत्वं न सिध्येदिति शङ्काभिप्रायात् । एवमुत्तरसूत्रेऽपि अर्थवादस्य वाच्यार्थ-
ृतप्रलयस्यापि स्वीकार्यतया वेदनित्यत्वं न स्यादिति शङ्कातात्पर्यं ग्राह्यम् ।

पत्वस्य तदवस्थत्वादेव न शब्दानित्यत्वम् । 'सूर्याचन्द्रमसौ धाता यथापूर्वमक 'यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये । दृश्यन्ते तानि तान्येव तथा भावा इति श्रुतिस्मृतिभ्यां तथैव प्रतिपादनादेतस्य नित्यत्वमपौरुषेयत्वञ्च । इदमेव स्यापौरुषेयत्वम्, यत् पूर्वपूर्वोच्चारणक्रमानुसंधानसापेक्षोच्चारणक्रमवत्त्वम् । नीन्तनवेदे सर्गाऽऽद्यवेदेऽपि समानम् । इयांस्तु विशेषः- —भगवद्व्यतिरि ऽपि पूर्वपूर्ववेदानुपूर्व्यनुभवजनितसंस्कारवशेन पूर्वानुपूर्वी स्मृत्वा तयैवानुपू मुच्चारयन्ति, भगवांस्तु संस्कारनिरपेक्षमेव पूर्वानुपूर्वीमनुसंधाय तयैवानुपूर्व्या च्चारयतीति । इदमेव हि पौरुषेयप्रबन्धापेक्षया वेदस्य वैलक्षण्यं नित्यत्वञ्च

ननु चतुर्मुखकर्तृकावान्तरकल्पसृष्टिविषयतयाऽपि, 'धाता यथ ल्पयत्' इत्यादिप्रमाणानामुपपत्तौ स्वतन्त्रपरमात्मकर्तृकब्रह्मकल्पाद्यसमयप्रवृत्त मुखादिसृष्टेः समानानुपूर्वीकत्वसमाननामरूपकृत्यत्वादौ किं प्रमाणमिति उच्यते । चतुर्मुखादेर्नामरूपकृत्यादीनि इतिहासपुराणादिभ्योऽवगत्य, 'एता रूपकृत्यविशिष्टश्चतुर्मुखो भवानि' इत्येवंसङ्कल्पपूर्वकं भगवन्तमाराध्य तत्तत्पदं वन्तीति हि शास्त्रप्रसिद्धिः । यदि हि कल्पान्तरे उत्पद्यमानश्चतुर्मुखो नामरूपकृत्यः स्यात्, तदा तस्य भगवदाराधकस्य वाञ्छितार्थसिध्यभावात् त धनत्वावेदकशास्त्रस्याप्रामाण्यमेव स्यात् । तत्तत्पदाभिलाषिणः प्रवृत्तिश्च क स्यात् । अतः प्राकृतसृष्ट्यावृत्तावपि यथापूर्वमेव सृष्टिरिति देवताधिकरणे स्थित

ननु अग्निलोकादूर्ध्वलोकवर्तिनामर्चिराद्यनतिवाह्यानां [1]ब्रह्मोपासकदेव राद्यातिवाहिकचिन्तनरूपाङ्गासंभवात्, तदङ्गत्वस्य, "तच्छेषगत्यनुस्मृतियो "योगिनः प्रति स्मर्येते स्मार्ते चैते" इत्यादिष्वाविष्कृतत्वात्, तदङ्गहीनानां कथमङ्गिभूतब्रह्मविद्यायामधिकार इति चेन्न—आतिवाहिकचिन्तनस्य दृष्टार्थत लोकवर्तिनां [2]तत्तदूर्ध्वलोकवर्त्यातिवाहिकचिन्तनेनैव साद्गुण्योपपत्तेः । मृतयज

1. ब्रह्मोपासकदेवानामित्यधिकं क. 2. तदूर्ध्वेति एकतत्पदं ख. कोशे । 3 जमानेष्टि ख.

ब्रह्मकल्पः । चतुर्मुखस्याहः सर्वं कल्प । तत्र, यत्र तदुत्पत्तिः, स ब्रह इत्येवमित्यनेन रुद्रो भवानि, इन्द्रो भवानि, वसिष्ठो भवानीत्यादिसंकल्पग्रहणम् ।

सूक्तवाके यजमानस्यायुराशासनाद्यभावात्, अनपेक्षितम्, 'आयुराशास्ते' शं विहाय अपेक्षितांशपाठस्याङ्गीकृतत्वात् तद्वदिहाप्यनपेक्षितातिवाहिकांश- क्षितस्वस्वलोकोर्ध्ववर्त्यातिवाहिकानामेव चिन्तनीयत्वोपपत्तेः ॥

नु, 'तदुपर्यपि बादरायणः संभवात्,' 'मध्वादिष्वसंभवात्' इत्यधि- न किं प्रयोजनम्; देवतानां देवताविशेषणाञ्चार्थित्वसामर्थ्यनिर्णयस्य प्रवृत्तिविशेषानौपयिकत्वात्। न च देवानामनेनाधिकरणद्वयेन किञ्चिदस्ति । तेषां स्वकीयपटुतरदेहादिमत्त्वे अर्थित्व[1]सद्भावनिर्णये च अधिकरण- क्षणादिति चेत् — उच्यते — 'परं ब्रह्म देवानां वस्वादिदेवताविशेषा- र्थ फलप्रदञ्चेति ईदृशमहिमविशिष्टतया उपासनकालेऽनुसंधेयत्वसिद्धिलक्षण- द्भावात्। देवताविग्रहासिद्धौ मधुविद्याया देवतापदप्राप्तिः फलमित्यपि न गत्यनुस्मृतौ अचेतनानामर्चिरादीनामेव मार्गपर्वत्वेन चिन्तनीयता स्यात्; कदेवतानाम्। तथा, "भाक्तं वाऽनात्मवित्त्वात्" इति सूत्रोक्तन्यायेन मादिकर्मफलं भुञ्जानानां, 'तं देवा भक्षयन्ति' इति निरन्तराजानदेवकर्म- गत्या वैराग्यं न सिध्येत्। [मानान्तर] प्राप्तिविरोधयोरसतोर्मन्त्रार्थवादानां ार्थे प्रामाण्यमस्तीति न्यायव्युत्पादनेन, 'प्लवा ह्येते अदृढा यज्ञरूपाः', तृतीयं स्थानम्' इत्यादिमन्त्रार्थवादैर्वैराग्यसंसिद्धिः' इत्यादीनि प्रयोजनानि ॥ प्रकृतमनुसरामः। ३-११.

चतुष्पात्त्व षाड्विध्याभ्यां ब्रह्मणो गायत्रीसादृश्यानुसंधानरूपा विद्या प्रस्तूयते—[2]

'इन्द्रः शचीपतिः, वलेन पीडितः। दुश्च्यवनो वृषा, समित्सु सासहिः॥'

ायत्री चतुष्पदा; एकैकस्य पादस्य षडक्षरात्मकतया षडक्षरपादवत्त्वेन च। एवं ब्रह्मणोऽपि सर्वभूतशब्दितात्मवर्ग एकः पादः; कर्मार्जितभोग- ः पृथिवीलोक एकः पादः; भोगोपकरणं शरीरमेकः पादः; आत्मस्थि- प्रदेशविशेषरूपं हृदयमेकः पाद इति भूतपृथिवीशरीरहृदयानि चत्वारः

[1]. संभव ख. [2]. गायत्री वा इत्यादिना इत्यधिकं ख. ग.

ुतप्रकाशिकोक्तं प्रयोजनं प्रदर्श्य न्यायरक्षामण्याद्युक्तमप्याह देवताविग्रहेति। या वैराग्यमिति। अवगत्यधीनं वैराग्यमित्यर्थः। प्राप्तिविरोधयोरिति। प्राप्तिः रप्राप्तता। अप्राप्ते हि शास्त्रमर्थवत्।

३—१२.

**गायत्री वा इदँ सर्वं भूतं यदिदं किञ्च। वाग्वै गायत्री। इदँ सर्वं भूतं गायति च त्रायते च॥ १॥**

पादाः। तत्र सर्वभूतलक्षणपादस्य ब्रह्मात्मकवाक्कर्तृकगानकर्मत्वत्राणकर्मत्वलक्षणं द्वयम्; पृथिवीलक्षणस्य पादस्य सर्वभूतप्रतिष्ठात्वसर्वभूतानतिवर्त्यत्वलक्षणं विधा शरीरहृदयलक्षणयोः पादयोः प्राणप्रतिष्ठात्वतदनतिवर्त्यत्वलक्षणं विधाद्वयमेव, रपि विधाद्वययोरपि[1] भेदाभावात्। ततश्च [पर] ब्रह्मरूपा गायत्री भूतपृथिवी हृदयरूपपादचतुष्टयवत्तया चतुष्पदा, गानकर्मत्वत्राणकर्मत्व सर्वभूतप्रतिष्ठात्वस नतिवर्त्यत्व सर्व [प्राणि] प्राणप्रतिष्ठात्वसर्वप्राणानतिवर्त्यत्वलक्षणविधाषट्कयुक्तत षड्विधा च। अतः चतुष्पात्त्वषाड्विध्याभ्यां ब्रह्मणि गायत्रीसादृश्यानुसंधानं कर्त प्रतिपादयति--**गायत्री वा इदं सर्वं भूतं यदिदं किञ्च**। अत्र गायत्रीश प्रसिद्धा गायत्री अभिधीयते। तस्याः भूतादिपाद्चतुष्टयसंबन्धाभावात्। 'त महिमा' इति [2]वक्ष्यमाणपुंसूक्तमन्त्रप्रतिपाद्यत्वाभावाच्च। अपितु परमात्मा। कुण्डपायिनामयने, 'मासमग्निहोत्रं जुहो (हु ?) ति' इति अग्निहोत्रशब्दः मानः तत्सादृश्यविशिष्टानुष्ठानार्थः, तथा गायत्रीशब्दो ब्रह्मणि प्रयुज्यमानः दृश्यानुसंधानार्थः। ततश्च गायत्रीशब्देन ब्रह्मैवाभिधीयते। वैशब्दोऽवधार ब्रह्मैव परिदृश्यमानसर्वभूतात्मकमित्यर्थः। ततश्च ब्रह्मणो भूतलक्षणपादवत्त्वम् अथ गायत्रीशब्दप्रवृत्तिनिमित्तमपि ब्रह्मण्युपपादयन् विधाद्वयमाह **वाग्वै— च। वाग्वै गायत्री**। गायत्रीशब्दितं गायत्रीसदृशं[3] ब्रह्मैव वाग्रूपविशिष्टं त्यर्थः। 'शब्दमूर्तिधरस्यैतद्रूपं विष्णोर्महात्मनः' इति पराशरस्मृत्याद्य ब्रह्मण एव शब्दरूपत्वमिति भावः। ततश्च किमित्यत्राह **वाग्वा इदं**—

1. अयं अपिः न क. कोशे. 2. वक्ष्यमाणे अधिकं क. कोशे. 3. 'गायत्रीसदृश'मि

उक्ता प्रागादिदिग्वर्तित्वसाध्यानुभाव्यादित्यमधुविद्या। प्रागादिसुषिगतादित्यादिद्वारपो कब्रह्मविद्या प्रस्तूयते **गायत्रीति**। **तत्सादृश्यविशिष्टेति**। इदमग्निहोत्रं दं नित्या सदृशार्थकम्। तेनास्य कर्मणः नित्याग्निहोत्रात् धर्मातिदेशसिद्धौ तदीयसर्वाङ्गविशिष्टापूर्वक सिद्धिरिति प्रकरणान्तरादिह कर्मभेद इति स्थितं पूर्वतन्त्रे (७-३-१; २-३-११.)।

**ब्रह्मण्युपपादयन्निति**। अत्र विद्यायां श्रुतिव्याख्याप्रकारः सर्वोऽपि **टीकायां** प्रकाशमतनिराकरणावसरे (ज्योतिरधिकरणे) कृतस्यानुवादरूप एवेतीदमग्रे वक्ष्यत एव

। वै सा गायत्री इयं वाव सा येयं पृथिवी। अस्याँ हीदं सर्वं
ष्ठितमेतामेव नातिशीयते ॥ २ ॥

ब्रह्म सर्वाणि भूतान्यभिधत्ते; हिताहितविधिनिषेधमुखेन त्रायते च।
णो वाग्रूपस्य [1]सर्वभूतगानत्राणकर्तृत्वाभ्यां गायत्रीशब्दवाच्यत्वम्, भूता-
ो ब्रह्मणो [2]वाग्रूपब्रह्मकर्तृकगानत्राणकर्मत्वाभ्यां द्वैविध्यञ्चोक्तं भवति।
क्तार्थानुवादपूर्वकं द्वितीयं पादं सामानाधिकरण्येनाऽऽह—या—पृथिवी।
शिष्टप्रकृतधर्मिपरो यच्छब्दः। या सर्वभूतरूपैकपादयुता गायत्री गायत्र्याख्यं
प्रसिद्धा पृथिवीत्यर्थः। कथं पृथिव्या ब्रह्मात्मकत्वमित्यत्राह अस्यां हीदं
प्रतिष्ठितम्। ब्रह्मात्मकत्वादेव हि सर्वभूतप्रतिष्ठात्वम्। न हि केवलपृथिव्याः
णशक्तिरस्तीत्यर्थः। प्रतिष्ठात्वञ्च नियतमित्याह एतामेव नातिशीयते।
तानि नातिवर्तन्ते। कर्मवश्यात्मनां हि प्रतिष्ठात्वादेव पृथिवी नियमेनाश-
णेत्यर्थः। पृथिवीमयब्रह्माण्डोदरे हि भोक्तृवर्गः परिवर्तते, न ततोऽन्यत्रेति
एवं द्वितीयः पादः, भूतप्रतिष्ठात्वतदनतिवर्त्यत्वरूपं विधाद्वयञ्चोक्तम्।

1. सर्वभूतेत्यधिकं ख. ग.    2. वाक्कर्तृक. ख.ग.

। सर्वभूतात्मकत्वानुपपत्त्या ब्रह्म मा ग्राहीत्येतदर्थमेव 'वाग्वै गायत्री'ति वाक्यप्रवृ-
ततः सर्वभूतगानादिकर्तृत्वात् भूतात्मकत्वमौपचारिकं गायत्र्यामिष्टमिति चेन्न—वक्ष्यमाण-
श्रयात्। ननु छन्दोभिधानादितिसूत्रे टीकान्ते शाङ्करीत्या सर्वभूतात्मकत्वस्य गायत्री-
धात् आकाशाधिकरणनयेन गानत्राणरूपयोगार्थमात्रविवक्षया गायत्रीपदं ब्रह्मपरं भवेत्।
। गायत्रीपदेन वाचं छन्द एव गृहीत्वा तत्सादृश्यरूपं प्रवृत्तिनिमित्तं ग्राह्यमित्युपपाद-
वै गायत्री'त्युक्तमिति किं न स्यात्। अतः, 'ब्रह्मैव वाग्रूपविशिष्टं भवति' इत्यर्थे-
मूर्तिधरस्येत्यादिप्रमाणोदाहरणञ्च कुत इति चेन्न — गायत्रीसादृश्यरूपार्थविवक्षायाः
पदेत्यादित एव स्पष्टं सिद्धेः अत्र छन्दसो वाचः सर्वभूतगानत्राणकरत्वमपि तद्गतब्रह्मा-
नमिति तत्त्वज्ञापनस्य युक्तत्वात्। अत्रेदं बोध्यम्—सर्वभूतात्मकपादे वाक्कर्तृकगानत्राण-
धाद्वयमेव प्रकृते वक्तव्यम्, पादान्तरे विधान्तरवत्। एवं सति,उपरि पादत्रयगत-
दं हि सर्वं भूतं गायत्र्या गीयते च त्रायते च' इति निर्देशे कार्ये, 'वाग्वै गायत्री
रीत्यन्तरादरणम्, छन्दसो गायत्र्याः सामान्यतो वाग्रूपत्वेनैव सर्वभूतगानकर्तृत्वसाम्ञ-
नये, ब्रह्मणो वक्ष्यमाणचतुष्पात्त्वषाड्विध्याभ्यामिव गानत्राणकर्तृत्वतोऽपि गायत्रीत्वमिति
। तत्र वाक्पदस्य ब्रह्मपर्यन्तता च पूर्वं पश्चाच्चेवात्रापि गायत्रीपदस्य ब्रह्मपरत्वादित्य-
।

या वै सा पृथिवी इयं वाव सा यदिदमस्मिन् पुरुषे शरी अस्मिन् हीमे प्राणाः प्रतिष्ठिताः एतदेव नातिशीयन्ते ॥ ३ ॥

यद्वै तत् पुरुषे शरीरमिदं वाव तद् यदिदमस्मिन्नन्तः पुरुषे यम् । अस्मिन् हीमे प्राणाः प्रतिष्ठिताः एतदेव नातिशीयन्ते ॥ ४

अथ तृतीयं पादमाह **या वै सा पृथिवी—शरीरम्**। अत्र पुरु शरीरविशिष्टजीवपरः । **पृथिवी** पृथिवीरूपपादविशिष्टा **या** गायत्री = गाय ब्रह्म, **सा शरीरं** शरीराख्यपादविशिष्टेत्यर्थः । भूतपृथिव्योर्गायत्रोसामानाधि निर्दिष्टतया भूतपृथिवीशब्दयोः ब्रह्मपर्यन्तत्वेन तदुपस्थापनक्षमत्वात् अभ्यप्राय अत्र शरीरलक्षणपादान्तरनिर्देशकस्य शरीरशब्दस्य निष्कर्षकशब्दत्वेऽपि सा करण्येन निर्देशो युक्तः । शरीरस्य ब्रह्मात्मकत्वं प्राणप्रतिष्ठात्वतदनतिवर्त्यत्वा पादयति **अस्मिन्—शीयन्ते । नातिशीयन्ते** नातिवर्तन्त इत्यर्थः ।

चतुर्थं पादमाह **यद्वै—हृदयम्** ।[1] [**पुरुषे शरीरं** पुरुषशब्दितशरीर जीवनिष्ठ]शरीराख्यपादविशिष्टं **यद्** गायत्र्याख्यं ब्रह्म, तदेव **हृदयं** हृदयश हृदयलक्षणपादकमित्यर्थः । हृदयस्य ब्रह्मात्मकत्वमुपपादयति **अस्मिन्——शी** प्राणशब्देन प्राणापानादयः इन्द्रियाणि [2]वा कथ्यन्ते । तेषां हृदयसंबन्धिना हृदयप्रतिष्ठितत्वम् । एवं तृतीयचतुर्थपादौ, प्राणप्रतिष्ठात्वतदनतिवर्त्यत्वरूपं द्वयश्चोक्तम् ।

1. नेदं क. कोशे । 2. च क.

---

**तृतीयं पाद**मिति । तृतीये तुरीये च वाक्ये गायत्रीपदानिर्देशेऽपि शरीरहृद त्पादत्वं सैषा चतुष्पदेत्यादितोऽवसीयते ।

**अभ्यप्रायन्यायेने**ति । शाबरभाष्ये, 'प्राये वचनाच्च' (२-२-११.) इति 'प्रधानकर्मप्राये वचनं प्रधानकर्मतामुपोद्बलयति, यथा अभ्यप्राये लिखितं दृष्ट्वा भवेत् इति मतिः ।' इत्युक्तम् । तन्मूलकोऽयं सर्वत्राभ्यप्रायन्यायव्यवहारः । युक्तश्चेति । वाक्यदेऽपि द्रष्टव्यम् । 'रसोऽहमप्सु ( गी. ता. चं ) ' इतिवदिति ।

**प्राणापानादय इन्द्रियाणि वे**ति । अर्थोदशखण्डे हृदयसुषिषु प्राणापानादि चक्षुरादिकतिपयेन्द्रियकथनाच्च तत्समानाभिप्रायकत्वस्यात्र युक्तत्वादिति भावः । इदं सूच प्राणपदव्याख्यानं पूर्वमकृत्वाऽत्र कृतम् ।

[ए]षा चतुष्पदा षड्विधा गायत्री । तदेतदृचाऽभ्यनूक्तम् — ॥ ५ ॥
[ता]वानस्य महिमा ततो ज्यायाँश्च पुरुषः ।
[पा]दोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि ॥ इति ॥ ६ ॥

[ए]वमुक्तं चतुष्पात्त्वं षाड्विध्यञ्च निगमयति **सैषा चतुष्पदा षड्विधा गा-**[यत्री।] नन्वेवं चतुष्पात्त्वे ब्रह्मणः परिच्छिन्नत्वं स्यादिति शंकायाम् उक्तस्य महिम्न [स्व]तेषेधिकामृचमुदाहरति **तदेतदृचाभ्यनूक्तम्** । **तदेतत्** गायत्र्याख्यं ब्रह्म, [अनु]कृत्य, ऋचाप्युक्तमित्यर्थः । ता[मृ]चं पठति **तावानस्य महिमा** । पूर्वोक्तः [ए]तस्य **महिमा** नियाम्यवर्गः । **ततो ज्यायांश्च पुरुषः** । पूर्वोक्तमहिमापेक्षया [ज्या]यान् [ परमात्मा ज्यायान् । ] ततोऽधिकमहिमशालीत्यर्थः । **पादोऽस्य** [सर्वा भूता]नि । अत्र **सर्वाभूतानी**ति कार्यजगदन्तर्गता अचित्संसृष्टाश्चेतना । ते सर्वे **पादः** अंशमात्रमित्यर्थः । सर्वशब्दात् परस्य शेः, 'सुपां सु[लुक्' इ]ति लुकि नलोपे [च] रूपम् । **त्रिपादस्यामृतं दिवि** । अत्र द्युशब्दः [प्रकृ]तितत्त्वबहिर्भूताप्राकृतस्थानविशेषपरः । अप्राकृते स्थानविशेषे **अस्य पर-**[मात्मनः] अमृतं पादत्रयमित्यर्थः । त्रिपात्त्वञ्चाप्राकृतैर्भोग्यभोगस्थानभोगोपकरणविशे-[षैर्भू]षणास्त्रादिरूपेण जगदन्तर्गतवस्त्वभिमानिभिर्नित्यैः भगवदनुभवमात्रपरैर्नित्य-मुक्तैश्च आत्मभिर्वा संभवति ।

अथ चतुर्थपादत्वेनोक्तस्य उपास्यतया वक्ष्यमाणस्य हृदयस्य स्तुत्यर्थं हृदया-[काश]बाह्याकाशाभेदेन महत्त्वं वक्तुं बाह्याकाशस्य ब्रह्मतुल्यत्वं सामानाधिकरण्येनाऽऽह

[1]. तामेव ऋचं क. 2. भूषणास्त्रादि. ख.

[उ]क्तस्य महिम्न इति । पुरुषसूक्ते, 'स भूमिं विश्वतो वृत्वा' इत्यारभ्य, एतावानस्य इत्युक्तम् । पृथिव्यां भूतशरीरहृदयान्यन्तर्गतानि । अतः **तावानस्य महिमे**ति पृथि-[व्या]दिपदार्थकृतचतुष्पात्त्वरूपमहिमानुवाद इति व्यक्तं श्रुतप्रकाशिकायाम् । **गायत्र्याख्यं** [ब्रह्म] । ब्रह्माभिप्रायेण **तदेतदि**ति नपुंसकत्वमिति व्यक्तं तत्रैव । उपरि, **यद्वै तद् ब्रह्मेति** इति [तदे]तदेतादिति पूर्वेण सहैकवाक्यताऽप्यस्तु इत्याशयः स्यात् । अत्र **तदेतत्** पादत्रयम् = [अपरिच्छि]न्नत्वं **अनूक्तम्** अपरिच्छिन्नत्वानुबन्धेन ऋचोक्तमित्यर्थवर्णनमपि संभवति । **मुक्तैश्चे**ति । **सर्वाभूतानी**ति पूर्वदशया गृहीतत्वे तु दिव्यनगरादिपालनाधिकृतनित्यगणग्रहणम् । चतुर्षु पादेषु हृदयस्य किमिति विशिष्य स्तुतिरित्यत्राह **उपास्यतया वक्ष्यमाणस्ये**ति । — **तदेतत्** पूर्णमिति गायत्रीब्रह्मोपासनमुच्यते । अथ च द्वारपोपासनमेवोपरि

यद्वै तद् ब्रह्मेति इदं वाव तत् योऽयं बहिर्धा पुरुषादा यो वै स बहिर्धा पुरुषादाकाशः ॥ ७ ॥ अयं वाव स योऽयमन्तः आकाशः । यो वै सोऽन्तः पुरुष आकाशः ॥ ८ ॥ अयं योऽयमन्तर्हृदय आकाशः । [1][यो ह वै (यो वै) सोन्तर्हृदय आ

1. [ ] एवं कुण्डलितं न शाङ्करे । माध्वे त्वस्ति ।

---

**यद्वै तद् ब्रह्मेति**— [1]**अन्तःपुरुष आकाशः** । स्वकार्यव्याप्तत्वामूर्तत्वा दिभिः ब्रह्मतुल्यबाह्याकाशाभिन्नः पुरुषशब्दितशरीरेऽन्तर्वर्तमान आकाश इ बाह्यान्तराकाशयोर्भेदसत्त्वेऽपि धर्म्यैक्याभिप्रायेणाभेदनिर्देशः । [2]**यो वै स पुरुष आकाशः** । एवं ब्रह्मतुल्यबाह्याकाशाभिन्नः शरीरान्तराकाशो य इत्यर्थः **वाव स योऽयमन्तर्हृदय आकाशः** । तादृशशरीरान्तःस्थाकाशाभिन्नो हृदया न्ताकाश इत्यर्थः । पूर्ववत् धर्म्यैक्यादिति भावः । [ एवं ब्रह्मतुल्यबाह्याकाश पुरुषान्तर्गताकाशाभेदं हृदयाकाशस्योक्त्वा एतादृशमहिमशाली हृदयाकाश इति **यो वै सोऽन्तर्हृदय आकाशः** । अन्तर्हृदये वर्तमानो य आकाशः, अ तादृशमहिमशालीत्यर्थः ] अनया च हृदयाकाशस्तुल्या चतुर्थपादत्वेनोक्तं हृदयं भवति ।

1. यद्वै—यो वै - आकाशः । स्वकार्य—ब्रह्मतुल्यो बाह्याकाशो यो वर्तत इत्यर्थः वाव—पुरुष आकाशः । तादृशबाह्याकाशाभिन्नःपुरुषशब्दित—श इत्यर्थः इति २
2. 'यो वै—हृदय आकाशः, अयं सः तादृशमहिमशालीत्यर्थः । अनया च ' इत्या अत्र यो वै सोऽन्तर्हृदय आकाश इति वाक्यग्रहणादिकं नास्ति ।

---

वक्ष्यते – अथापि हृदयच्छिद्रदेवतारूपद्वारपोपासनविधानात् एवमुक्तिः । अत्रार्थात्, 'यथ रिच्छिन्नस्याप्याकाशस्य शरीरहृदयादिकृतः परिच्छेदः, तथा ब्रह्मणोऽपि चतुष्पात्त्वकल्प नापरिच्छिन्नत्वक्षतिरिति ब्रह्मणि व्योमवद्भावो दर्शितो भवतीत्यपि ध्येयम् । अत्र मूले अयं **स योऽयमन्तर्हृदय आकाशः, तदेतत् पूर्णमप्रवर्ति** इत्यानुपूर्व्यैव शाङ्करे, टी भावप्रकाशिकयाश्च लक्ष्यते । न तु, **यो वै सोऽन्तर्हृदय आकाश** इति वाक्यं तन्मध्ये लक्ष उपनिषद्भाष्यपाठस्तु द्वेधा लक्ष्यते । तादृशमूलपाठसत्त्वे तस्य **तदेतत् पूर्ण**मित्युत्तरवाक्यं वाक्यताकल्पनया, 'यः सोऽन्तर्हृदय आकाशः तत् तदभिन्नं एतत् गायत्रीब्रह्म—बाह्या द्यभिन्नहार्दाकाशाभिन्नम् अपरिच्छिन्नत्वेऽप्याकाशवत् हृदयादिना परिच्छिद्यमानं ब्रह्म—ब

तदेतत् पूर्णमप्रवर्ति[1]। पूर्णामप्रवर्तिनीं[2] श्रियं लभते, य एवं वेद ॥९॥

इति तृतीयाध्याये द्वादशः खण्डः

३–१३.

तस्य ह वा एतस्य हृदयस्य पञ्च देवसुषयः। स योऽस्य प्राङ्
स प्राणः, तच्चक्षुः, स आदित्यः। तदेतत् तेजोऽन्नाद्यमित्युपा-
तेजस्व्यन्नादो भवति, य एवं वेद ॥ १ ॥
अथ योऽस्य दक्षिणः सुषिः, स व्यानः, तच्छ्रोत्रम्, स चन्द्रमाः।
श्रीश्च यशश्चेत्युपासीत। श्रीमान् यशस्वी भवति, य एवं वेद ॥ २ ॥

अप्रवृत्ति भा.

---

एवं चतुष्पदः षड्विधस्य ब्रह्मणः प्रपञ्चान्तर्भावेन परिच्छिन्नत्वास्थिरत्वशङ्का-
र्यं पूर्णत्वाप्रवर्तित्वगुणकतयोपासनं मोक्षफलं विदधाति तदेतत् पूर्णम-
पूर्णत्वमपरिच्छिन्नत्वम् अप्रवर्तित्वमचलत्वम्, पूर्णामप्रवर्तिनीं श्रियं
य एवं वेद। अनन्तस्थिरा श्रीः मुक्तैश्वर्यमेव। तदुपासीनो मुक्तिं भज-
। ३–१२.

अथोक्तब्रह्मोपासनाङ्गत्वेन द्वारपोपासनं विधीयते—तस्य—देवसुषयः।
य चतुर्थपादत्वेन निर्दिष्टस्य प्रकृतस्य हृदयस्य देवताधिष्ठानभूतानि पञ्च
ाणीत्यर्थः। स योऽस्य—वेद। प्राणवृत्तिविशेषाप्यायितचक्षुरनुग्राहका-
हृदयप्राक्सुषिरद्वारपालस्य तेजोन्नाद्यतयोपासने उपासकः स्वयमपि तेजस्वी
भवतीत्यर्थः। तदेतदिति आदित्यस्य तेजोन्नाद्यापेक्षया नपुंसकलिङ्गनि-
[ तेजस्वित्वं लावण्यम् ] एवमुत्तरत्रापि।

अथ योऽस्य—वेद। श्रीमान् संपत्तिमान्। ब्रह्मवर्चसं वृत्ताध्ययनजं

---

[1] इति व्याख्यानमपि संभवति। अथापि तस्य पाठस्य टीकादौ अदर्शनात्, तदेतत्
य चतुष्पात् षड्विधं ब्रह्मेत्येव टीकायां व्याख्यानात्, माध्वरीत्या तादृशमूलपाठादर-
। वै सोऽन्तर्हृदय आकाश' इत्यत्रैवावान्तरवाक्यद्वयकल्पनया, योऽयमन्तर्हृदय आकाशः,
उक्तमहिमशालीति टीकाऽविरोधेन योजना कृता अधिकपाठे इति ध्येयम्।

प्राणः, तच्चक्षुः स आदित्य इति। सुषिः प्राणः, प्राणश्चक्षुः, चक्षुरादित्य इत्यर्थः।
यथायथमौपचारिक इति व्यक्तम्। नपुंसकेति। नन्वेवं निर्वाहः तदेतत् की-

अथ योऽस्य प्रत्यङ् सुषिः, सोऽपानः, सा वाक्, सोऽग्निः। त
ब्रह्मवर्चसमन्नाद्यमित्युपासीत। ब्रह्मवर्चस्य[1]न्नादो भवति, य एवं वेद।

अथ योऽस्योदङ् सुषिः, स समानः, तन्मनः, स पर्जन्यः। त
कीर्तिश्च व्युष्टिश्चेत्युपासीत। कीर्तिमान् व्युष्टिमान् भवति, य एवं वेद

अथ योऽस्योर्ध्वः सुषिः स उदानः, स वायुः, स आक
तदेतदोजश्च महश्चेत्युपासीत। ओजस्वी महस्वान् भवति, य एवं वेद।

ते वा एते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपाः।
एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् वेद, अस्य कुले
जायते। प्रतिपद्यते स्वर्गं लोकम्, य एतानेवं पञ्च ब्रह्मपुरुषान् स
लोकस्य द्वारपान् वेद ॥ ६ ॥

1. ब्रह्मवर्चस्वी मा.

---

तेजः। पर्जन्यः देवताविशेषः। व्युष्टिः देहकान्तिः। ओजः बलम्।
महः। आकाशश्च देवताविशेषः।

ते—द्वारपाः। त एते उक्तगुणविशिष्टाः आदित्यचन्द्रमोऽग्निपर्जन्या
ख्याः ब्रह्मपुरुषाः ब्रह्मसंबन्धिनः पुरुषाः स्वर्गस्य लोकस्य भगवल्लोकस्य
काशाख्यस्य द्वारपालकाः। यद्वा भगवल्लोकस्य द्वारपाः आतिवाहिकाः। स य
अस्य कुले वीरो जायते। वीरः पुत्रो जायते। विद्यावीर्यसंपन्नो जायत इ
आनुषङ्गिकं फलमुक्त्वा प्रधानफलमाह प्रतिपद्यते—। भगवल्लोकद्वारपालव
नया अनिवारितः सन् भगवल्लोकं प्रतिपद्यत इत्यर्थः॥

---

र्तिश्च व्युष्टिश्चेत्युपरितनवाक्ये न घटते। अतः तदेतदिति प्राणचक्षुरादिसमाहारतय
दग्निग्रहृदयपरतया वा निर्वाह्यमिति चेन्न – उपरि, 'ते वा एते पञ्च ब्रह्मपुरुषा' इति इ
विशिष्य ग्रहणात् देवताभूतानाञ्च तेषामुपासने प्राधान्यस्य युक्तत्वात् आदित्याद्युपास
स्वीकृत्य नपुंसकत्वं कथमपि नेयमिति टीकाशयात्। स उदानः स वायुरिति
चक्षुरादीन्द्रियकथनादत्र वायुपदं वाय्वाप्यायितत्वगिन्द्रियपरं स्याच्चेत्, 'चक्षुः श्रो
वाक् त्वक्' इति तैत्तिरीयपाङ्क्तमन्त्रोक्तिं स्यात्। ननु गायत्र्युपासनफलं खलु भगवल्लोक
तत् कथं द्वारपरूपाब्रह्मोपासनफलमित्यत्राह अनिवारितः सन् इति। तत्फलस्यैतत्
कीर्तनेन तदङ्गमेतदिति ज्ञाप्यत इति भावः। एवञ्च वीरजन्म आनुषङ्गिकं फलम्।

। यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्व- त्तमेषु लोकेषु, इदं वाव तद् यदिदमस्मिन् अन्तः पुरुषे ज्योतिः । यैषा दृष्टिः ॥ ७ ॥, यत्रैतदस्मिन् शरीरे सँस्पर्शेनोष्णिमानं विजानाति ।

---

एवं गायत्रीविद्याप्रकृतस्य द्युसंबन्धिनः सकलफलप्रदस्य परस्य ब्रह्मणः आभि- र्तिमत्त्वरूपफलविशेषार्थं कौक्षेयज्योतीरूपत्वेनोपासनाविधानायाऽऽह —अथ —लोकेषु । 'तथाऽक्षरात् संभवतीह विश्वम्' इत्यत्र जगदन्तर्वर्तिव्यष्टि- वेश्वशब्दप्रयोगात् विश्वशब्दो व्यष्टिपरः । सर्वशब्दः परिशेषात् समष्टितत्त्व- ततश्च अतः परो दिवः अप्राकृतस्थानविशेषस्योपरिष्टात् समष्टिव्यष्टिबहिर्भूतेषु मेषु स्वावधिकोत्तमरहितेषु उत्तमस्थानविशेषेषु, 'तस्य भासा सर्वमिदं । ' इत्यवभासकतया ज्योतिश्शब्दितः परमात्मा यो दीप्यत इत्यर्थः । अत्र दस्य सर्वनामत्वेन प्रकृतपरामर्शितया प्रकृतं त्रिपाद् ब्रह्म परामृश्यते । इदं— ः । तत् दिवः परस्तात् दीप्यमानं त्रिपाद्ब्रह्म, यदिदमस्मिन्नन्तःपुरुषे शरी- ः ज्योतिः, इदं वाव=कौक्षेयज्योतिरेव । कौक्षेयज्योतिश्शरीरकमेवेत्यर्थः । वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । प्राणापानसमायुक्तः पचाम्यन्नं चतु- ॥ ' इति स्मरणात् । ततश्च तदात्मकत्वानुसंधानं कर्तव्यमित्यर्थः ।

तस्यैषा दृष्टिः । तस्य परमात्मनः शरीरभूतस्य जाठराग्नेः एषा दृष्टिः इदं मित्यर्थः । यत्र—उष्णिमानं विजानाति । [ [1]यत्र यदा अस्मिन् शरीरे हस्त- उष्णिमानं विजानाति । इति यत्र ] यत् औष्ण्योपलम्भनमित्यर्थः[2] । [ उपलभ्य- ोष्णस्पर्शस्य जाठराग्निसंबन्धित्वात् तत्स्पर्शसाक्षात्कार एव तत्साक्षात्कार इत्यर्थः ।]

1. कुण्डलितं न ग. कोशे. । 2. इत्यर्थइत्यादि इत्यर्थइत्यन्तं घ. कोशे न ।

---

गायत्रीविद्याप्रकृतस्येति । मध्ये यएवंवेदेति सकृत्सकृदुक्त्या कौक्षेयज्योतिःकथ- र य एवं वेद यएवं वेदेति द्विरुक्त्या, 'ततोभूय इति ततोभूय इति ' इति प्रागु- रं तावत्पर्यन्तमेकविषयकमित्यवधार्यते ॥ अथ यदत इति दिवः अत्र इति विशेषणं, स्यामृतं दिवि', 'स्वर्गं लोकम्' इति प्रागुक्तपरामर्शात् । तेन यत्पदमिवेदमपि उक्त- ं ज्योतिषः साधयतीति ध्येयम् । परः परतः ।

**तस्यैषा श्रुतिः, यत्रैतत् कर्णावपिगृह्य, निनदमिव, नदथुरिव, अ[1]ज्वलत उपशृणोति ।**

**तदेतत् दृष्टश्च श्रुतश्चेत्युपासीत । चक्षुष्यः श्रुतो भवति, य वेद य एवं वेद ॥ ८ ॥**

इति तृतीयाध्याये त्रयोदशः खण्डः

1. प्रज्वलतः मा.

---

**तस्यैषा श्रुतिः—उपशृणोति ।** **यत्र** यदा पुरुषः स्वकर्णौ अङ्गुलीभ्यामा **निनदमिव** रथघोषमिव, **नदथुरिव** नदथुमिव ऋषभकूजितमिव, बहिर्ज्वलतं शब्दमिव च शृणोति । इति यत्, तदेव[1] जाठराग्निश्रवणम् । आन्तरस्य शब्दस्य राग्निसंबन्धित्वात् तच्छब्दश्रवणमेव तच्छ्रवणमित्यर्थः ।

**तदेतद् दृष्टं च श्रुतं चेत्युपासीत ।** तदेतत् परमात्मशरीरभूतं कं ज्योतिः उक्तरीत्या दृष्टत्वश्रुतत्वाभ्यां गुणाभ्यामुपासीतेत्यर्थः । तस्य फलमाह **चक्षुष्यः श्रुतो भवति, य एवं वेद ।** चक्षुष्यत्वमाभिरूप्यम् । चक्षुषे हित इ 'शरीरावयवाच्च' इति यत् । श्रुतत्वं कीर्तिमत्त्वम् । द्विरुक्तिर्विद्यासमाप्त्यर्था

उक्तश्रुत्यर्थः सर्वोऽपि ज्योतिरधिकरणे श्रुतप्रकाशिकायां स्पष्टः ॥

1. तदेतत् ग.

---

**चक्षुष्य इति ।** ननु **संस्पर्शेनेति** त्वगिन्द्रियदृष्टत्वमुष्णिम्न उक्तम् । ततः त्वगिन्द्रियदृष्टत्वोपासनफलं कथं चक्षुष्यत्वमिति चेन्न । उष्णिम्नस्तथात्वेऽपि उपासनस्य सामान्यतो दृष्टविषयकत्वात् स्वस्य दर्शनीयरूपवत्वात्मकचक्षुष्यत्वसंपत्तेः । न च **दृष्टमि**त्यस्य प्रत्यक्षसामान्य इत्यर्थस्वीकारे **श्रुत**मिति व्यर्थमिति वाच्यम् – स्पर्शस्य द्रव्येण सहेन्द्रियग्राह्यत्वात् ज्योतिषोंऽशतः प्रत्यक्षस्य सिद्धान्ते वायोरिव स्वीकार्यत्वात्, शब्दस्य च द्रव्यं विनैव ग्राह्यत्वात् दृष्टमित्यनेन साक्षात् प्रत्यक्षविषय (द्रव्य) त्वोपासनं श्रुतमिति प्रत्यक्षविषयवत्त्वोपासनञ्चोच्यत इति वैलक्षण्यात् । एवञ्च **तत्स्पर्शसाक्षात्कार एव तत्साक्ष** इति भाष्यपाठे स्पर्शसाक्षात्काररूप एव तत्साक्षात्कारः, न तु रूपसाक्षात्काररूपः इत्यर्थः । ज्योतिष स्पर्शेन सहैवोपलम्भात्; रूपेण सहानुपलम्भात् । **तच्छब्दश्रवणमेव तच्छ्र**मित्यस्य तु द्रव्यस्य श्रोत्राग्राह्यत्वात्, तच्छ्रवणत्वं तदीयशब्दश्रवणे औपचारिकमित्यर्थ इति

डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते —

थ यदतः परो दिवो ज्योति'रिति ज्योतिश्शब्दितं प्रसिद्धमग्न्यादिज्योतिरेव क्याध्यासस्य भौतिकज्योतिष्येवोपपत्तेः । दीप्तेः रूपवद्विषयत्वेन नीरूपे ीप्तेरसंभवात् । 'दिवः परः' इति द्युमर्यादत्वस्यापि निर्मर्यादे परमात्म- यभा ) वात् । 'लोकेषु' इत्याधारबहुत्वस्यापि निराधारेऽसंभवात् । चक्षु- ष्याल्पफलश्रवणाच्च । रूपवद्विषयदीप्ति—द्युमर्यादत्व—आधारबहुत्व—कौक्षेय- —चक्षुष्यत्वश्रुतत्वरूपाल्पफलोपासनोपास्यत्वरूपवाक्यशेषश्रुतलिङ्गानुगृहीत- । प्रसिद्धमग्न्यादिज्योतिरेवेहोपदिश्यत इति पूर्वपक्षे प्राप्ते उच्यते —

**ज्योतिश्चरणाभिधानात्**' । द्युसंबन्धितया निर्दिष्टं निरतिशयदीप्तियुक्तं मपुरुष एव । 'पादोऽस्य सर्वा भूतानि' इति मन्त्रे द्युसंबन्धिनः सर्व- भिधानात् । तस्यैव द्युसंबन्धिन इहापि द्युसंबन्धित्वेन प्रत्यभिज्ञानात् । सर्वनामत्वेन प्रकृतपरामर्शित्वस्यैव युक्ततया द्युसंबन्धित्वेन प्रकृतत्रिपाद्ब्रह्म- युक्तत्वात् । फलार्थतया परमात्मन्येव कौक्षेयज्योतिश्शरीरकत्वानुसंधान- रूपवद्विषयदीप्तिद्युमर्यादत्वलोकाधारत्वादीनाम् अन्तरादित्यविद्यान्यायेन ष्ट एवोपपत्तेः, भासकत्वप्रवृत्तिनिमित्तकज्योतिश्शब्दस्यापि तत्र वृत्तिसंभ- श्शब्दितः परमपुरुष एव ।

**छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगमात् तथा हि दर्शनम्**' । गायत्री वा इदं सर्वम्' इति गायत्र्याख्यच्छन्दस एव प्रकृतत्वात् तस्यैव, सर्वा भूतानि' इति सर्वभूतचरणत्वाभिधानात् न परब्रह्मणः प्रकृतत्वम्, द्श्रुत्या तत्परामर्शः स्यात् इति चेत्, न—तत्र गायत्रीशब्देन न छन्दः । अपितु ब्रह्मण एव गायत्रीचेतोर्पणमिह निगम्यते । ब्रह्मणि गायत्री- धानं फलायोपदिश्यत इत्यर्थः । चतुष्पदश्च ब्रह्मणः चतुष्पदया गायत्र्या ात । तथा अन्यत्रापि सादृश्यात् छन्दोभिधायी शब्दः अर्थान्तरे प्रयुज्य- ते । यथा संवर्गविद्यायाम् अग्निसूर्यजलचन्द्रवायु—वाक्चक्षुःश्रोत्रमनः- दशसु दशत्वसंख्यासाम्यात्, 'सैषा विराडन्नादी' इति छन्दोवाचिनो

## ३—१४

सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत ।

विराट्छन्दस्य प्रयोगो दृष्टः । 'भूतादिपादव्यपदेशोपपत्तेश्चैवम्' । भूत। शरीरहृदयलक्षणपादचतुष्टयस्य, 'सैषा चतुष्पदा' इति प्रतिपादितस्य छन्दो गायत्र्यामसंभवात् गायत्रीशब्देन ब्रह्मैवाभिधीयते । अतो गायत्रीशब्दितं ब्रह्मैव ज्योतिर्वाक्येऽपि यच्छब्दश्रुत्या पूर्वप्रत्यभिज्ञापकद्युसंबन्धित्वलिङ्गानुग प्रतिपाद्यते । 'उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्' । पूर्व 'त्रिपादस्यामृतं दिवि' इति दिवोऽधिकरणत्वेन निर्देशात् ज्योतिर्वाक्ये, 'दिव इति अवधित्वेन निर्देशात् न प्रत्यभिज्ञासंभव इति चेन्न— वृक्षाग्रे वर्तमाने वृक्षाग्राच्छ्येनः, वृक्षाग्रे श्येनः इति पञ्चमीसप्तम्योः प्रयोगदर्शनवत् इहाप्युप भाव इति स्थितम् ॥ प्रकृतमनुसरामः—

शाण्डिल्यविद्या प्रस्तूयते—

**सर्वं खल्विदं — उपासीत ।** जायत इति **जम्** । लीयत इति जलशब्दौ डप्रत्ययान्तौ । अनितीति **अन्** । अनिति = जीवतीत्यर्थः । विजन्तो वाऽयं शब्दः । तस्य जलान् **तज्जलान्** । **इतिर्हेत्वर्थः** । स सर्वशरीरकपरः । इदमित्येतत् ब्रह्मणः, सर्वस्य वा विशेषणम् । अतश्च त तज्जत्वात्, तदनत्वात् सर्वात्मकं ब्रह्मेति शान्तः सन् उपासीतेत्यर्थः । अत्र त ल्लत्वे स्थूलचिदचिच्छरीरकब्रह्मगते । [1]तदनत्वरूपं तन्नियाम्यत्वं तु न ब्रह्म ब्रह्मणस्तदसंभवात् । अपितु चिदचिन्मात्रगतमिति द्रष्टव्यम् ।

[2]भगवता भाष्यकृता, "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उ इति सर्वोत्पत्तिस्थिति (?) प्रलयकारणत्वेन सर्वस्यात्मतयाऽनुप्रवेशकृतजीवयितृ सर्वात्मकं ब्रह्मोपासीतेति उपासनं विधाये" ति भाषितम् । व्यासार्यैश्च, "

1. ब्रह्मगते तदनुरूपे । तन्नियाम्यत्वं तु ख. ग. 2. भगवता च भाष्य भगवता भाष्यकृता च. क.

तज्जत्वात् — सर्वात्मकं ब्रह्मेति । सर्वस्येत्यादिः । 'ब्रह्मणो जातत्वात् ब्रह्मणि ब्रह्माधीनजीवनत्वाच्च हेतोर्ब्रह्मात्मकं सर्वं खल्विदं जगत्' इति भाष्यरीतिरिह भाव्या । न मिति । तदिदमत्र भाष्यादौ, 'कृत्स्नस्य जगतो ब्रह्मकार्यतया तदन्तर्यामिकतया टीकायाश्च स्पष्टम् । अत्र वाक्येऽयमंशो विधीयते, अयं नेति विवेकाय भाष्यादिकं

त्य शास्त्रादवगम्य, 'सर्वभूतात्मके तात जगन्नाथे जगन्मये । परमात्मनि मैत्रामित्रकथा कुतः' इत्युक्तरीत्या रागद्वेषादिरहितस्सन् वक्ष्यमाणगुणकं ोत्यर्थ" इत्युक्तम् ।

क्ष्यमाणगुणकं ब्रह्मेति वदतां व्यासार्याणामयमाशयः — सर्वं खल्विति सार्वात्म्यं तु नोपास्यगुणः । उत्पत्तिशिष्टसार्वात्म्यगुणावरुद्धे मनोमयत्वादि- ुणविधानानुपपत्तिप्रसङ्गात् । न चोपासनोत्पत्तिवाक्यश्रुतस्य सार्वात्म्यस्य कथमभ्युपगन्तव्येति वाच्यम्—सर्वं खल्विदं ब्रह्म तज्जलानित्यन्तस्य वाक्यस्य कृतेन प्रसिद्धवन्निर्देशेन एकवाक्यत्वस्य निवारितत्वात् । न हि, 'उपासीत ते वचनव्यक्तिर्घटते । अतः सार्वात्म्यस्योपासनोत्पत्तिवाक्यश्रुतत्वाभावेन, पासीत' इति वाक्ये उपास्याकाङ्क्षायां पूर्ववाक्यप्रतिपन्नस्य ब्रह्मरूपधर्मिमात्र- तयाऽन्वयः, न तु सार्वात्म्यविशिष्टस्य । ततश्चोत्पत्तिशिष्टसार्वात्म्यानवरोधात् णमनोमयत्वादिगुणानन्वयशङ्का । "सर्वात्मकं ब्रह्मोपासीत" इति तदर्थे- ाष्येऽपि सर्वात्मकत्वं नोपास्यगुणतया निर्दिष्टम् । अपितु उपास्यब्रह्मणः ानमात्रपरमिति । एतच्च सर्वमपि तैः कण्ठत एव वर्णितञ्च ।

नु, 'ब्रह्मात्मकत्वं सर्वस्य शास्त्रादवगम्य रागद्वेषादिरहितस्सन् वक्ष्यमाण- ह्मोपासीतेत्यर्थः' इति व्यासार्यैरेवोक्तत्वात्, तदेकवाक्यत्वसंभवे, 'तज्जला- ्यन्तस्य पृथग्वाक्यत्वकल्पनाऽयोगात्, सार्वात्म्यस्योत्पत्तिवाक्यविहितत्वेऽपि ादीनामुत्पत्तिशिष्टगुणाविरोधिनामन्वये दोषाभावाच्च वाक्यभेदकल्पनं वा, विद्यायां सार्वात्म्यस्यानुपास्यत्वकल्पनं वा व्यर्थमिति चेन्न — उपासीतेत्यनेन

। उत्पत्तिशिष्टेति । उत्पत्तिवाक्योपदिष्टेत्यर्थः । यत्र कर्मस्वरूपं विधीयते, तत् ्यम् । **धर्मिमात्रस्येति** । यदि धर्मिणो ब्रह्मणोऽप्युत्पत्तिवाक्येऽत्र अश्रुतत्वेनानन्वयः, ्रवणात्, संभवति रूपवति वाक्ये कर्मविधाने नीरूपे तद्विधानं न युक्तमिति उपासन- ' न स्यात् । उपासेर्नियमेन कर्माकाङ्क्षत्वात्तु अन्यत्रान्वितमपि ब्रह्म आकाङ्क्षाबलात् ा; न तथा सर्वात्मकत्वमप्याकांक्ष्यमिति । ननु अभिरहस्योपक्रमे 'सर्वं खलु' इत्या- सत्यं ब्रह्मेत्युपासीते' ति श्रवणात् सत्यत्वविशिष्टब्रह्मविधानं स्वीकार्यम् । सत्यत्वञ्च धात् सत् ति यम् इति श्रुत्यन्तरकृतविभागानुसारेण च चिदचित्सर्वान्तर्यामित्वरूप- ापि सर्वात्मकत्वं विवक्षितमिति चेन्न — स्वरसाकाङ्क्षाविरहेणात्र तदविवक्षया मनोमय- वेधानाविरोधात् । श्रुत्यन्तरबलेनैव तस्याप्युपास्यगुणतया स्वीकारेऽपि प्रकृतवाक्ये

अथ खलु क्रतुमयः पुरुषः । यथाक्रतुरस्मिन् लोके पुरुषो :

वाक्यैकवाक्यत्वाभ्युपगमेऽपि [1]पदैकवाक्यत्वनिराकरणे दोषाभावात् । शा तथाऽन्वितस्य सार्वात्म्यस्योपास्यत्वे प्रमाणाभावादिति व्यासार्याभिप्रायात् । ननु सर्वात्मकत्वात् यत्र क्वचित् क्रियमाणस्यापि द्वेषादेरात्मद्वेषपर्यवसन्नत्वेनायु शान्तः सन्नुपासीतेत्युक्ते, ब्रह्मोपासीतेति कथमवगम्यते, सर्वं खल्विदं ब्र शमविध्यर्थवादभूतस्योपास्यसमर्पकत्वाभावादिति चेत् — सत्यम् — शमविः निर्दिष्टस्यापि ब्रह्मण उपास्याकाङ्क्षापूरकत्वस्यापि संभवात् । अन्यार्थतयापि स्व निर्दिष्टं ब्रह्म विहायोपास्यान्तरकल्पनस्यानुचितत्वात् । 'मूलतः शाखां परिवार करोति' इत्यत्र 'मूलत' इत्यस्य शाखापरिवासनेऽपादानतयाऽन्वितस्यापि अ वशेन, 'उपवेषं करोति' इत्यनेनाप्यन्वयाभ्युपगमादिति द्रष्टव्यम् ।

विहितमुपासनं स्तौति — **अथ खलु** — **भवति** । 'तं यथायथो तथैव भवति'' इति श्रुत्यन्तरादिह लोके पुरुषः **यथाक्रतुः** यथोपासनः, र

1. प्रकारान्तरेणैकवाक्यत्व घ.

तस्याविवक्षणीयत्वात् । **मूलत** इति । अयमर्थो मी ४-२ ३, द्रष्टव्यः । दर्भे शाखामाह मूलांशात् अग्रांशं पृथक्कृत्य मूलमुपवेषं करोति । अग्रभागरूपां शाखां वत्सापाकरणे, मू मुपवेषश्च कपालोपधाने उपयुज्यते ।

**स्तौती**ति । भाष्ये, अथ खल्वित्यादिवाक्यं गृहीत्वा, 'यथोपासनं प्राप्यसिद्धिर्म इति व्याख्यातत्वात्, 'स्तुतयेऽनुमतिर्वे'ति सूत्रे विद्यायाः 'न कर्म लिप्यते नरे' क्त्वरूपवास्तवार्थमादाय स्तुतिकथनवत् अत्रोपासनस्य स्वविषयप्रकारप्रापकत्वरूपवास्तवार्थेन कथनमिति ध्येयम् । एवञ्च उपासनम्, यथोपासितफलप्राप्तिश्च क्रमेण कथयित्वोपास्याकार रूपः स क्रतुमित्यादिनोपदेक्ष्यते । अस्य तत्क्रतुवाक्यस्यार्थवैशद्याय श्रुत्यन्तरं गृह्णाति तं यथेति । तत्र **उपासत** इति प्रयोगादिह क्रतुशब्द उपासनपर इति विशदम् । अत्रै शान्त **उपासीते**त्युपासिप्रयोगात्, **इति यस्य स्याद**द्धेति अन्ते निश्चयात्मकज्ञान मध्येऽयं क्रतुशब्द उपासनज्ञानपर इत्यवसीयत एव । **उपासते, भवती**ति क्रमेण बहु वचनप्रयोगात्, उपासकाः पूर्वत्र कर्तारः, उपास्य उत्तरत्र कर्तेति स्पष्टम् । तथाचोपासका येन प्रकारेणोपासते, तत्तत्प्रकारः स फलकाले तेषां भवतीति तद्वाक्यार्थः । तदनुसारेण वाक्येऽप्यर्थस्य वर्ण्यत्वे स्थिते, **प्रेत्ये**ति ल्यबन्तसमानकर्तृकत्वस्यात्र **भवती**ति पदे कत्वेन उपास्यस्य परमात्मनो भवतिकर्तृत्वायोगेन, **भवती**त्यत्र 'अनु' इत्युपसर्ग र्थान्तर्भावकल्पनया **तथा भवति**, तादृशमनुभवति, तादृशमभिसंभवतीत्यर्थो भाष्यः । प्रेत्याभिसंभवितास्मीति वक्ष्यमाणत्वात् । यदि तु — **यथाक्रतुः** यादृशप्राप्तिप्रकारकोपास

प्रेत्य भवति ।
स क्रतुं कुर्वीत ॥ १ ॥ --- मनोमयः प्राणशरीरो भारूपः सत्यसं-
काशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्या-
त्तोऽवाक्यनादरः ॥ २ ॥

---

ष्मिन् लोके भवति । ततो हेतोः पुरुषः क्रतुमयः क्रतुप्रधानः, उपासन-
यर्थः । ततश्चोपासनस्यैव हिततमत्वात् सर्वथाऽनुष्ठेयमित्यर्थः ।
एवं विहितं ब्रह्मोपासनं मनोमयत्वादिगुणान्तरविधानायानुवदति --- स क्रतुं
सः उपासकः क्रतुं ब्रह्मण उपासनं कुर्वीतेत्यर्थः । गुणानेवाऽऽह -- मनो
रिशुद्धमनोमात्रग्राह्यः । विवेकादिसाधनसप्तकानुगृहीतपरमात्मोपासननिर्मली-
त्रग्राह्य इत्यर्थः । प्राणशरीरः जगति सर्वेषां प्राणानां धारकः । प्राणो यस्य
= आधेयं विधेयं शेषभूतञ्च स प्राणशरीरः । आधेयत्वविधेयत्वशेषत्वानामेव
दप्रवृत्तिनिमित्तत्वात् । भारूपः भास्वररूपः । 'आदित्यवर्णं तमसः पर-
'पश्यते रुक्मवर्णम्' इत्यादिवाक्यप्रतिपन्नाप्राकृतस्वासाधारण निरतिशय-
ुणगणनिरतिशयदीप्तियुक्तविग्रहशालीत्यर्थः । सत्यसंकल्पः अप्रतिहतसं-
आकाशात्मा आकाशवत् सूक्ष्मस्वच्छस्वरूपः । सकलेतरकारणभूतस्या-
काशस्यात्मभूत इति वा आकाशात्मा । स्वयञ्च प्रकाशते, अन्यांश्च प्रका-
वा आकाशात्मा । सर्वकर्मा । क्रियत इति कर्म । सर्वं जगत् यस्य कर्म,
सर्वकर्मा । सर्वा वा क्रिया यस्याराधनमसौ सर्वकर्मा । सर्वकामः ।
इति कामाः भोग्यभोगोपकरणादयः । ते परिशुद्धास्तस्य सन्तीत्यर्थः[1] ।
धः सर्वरसः । 'अशब्दमस्पर्शम्' इत्यादिना प्राकृतगन्धरसादिनिषेधात्
ः स्वासाधारणाः निरवद्याः निरतिशयाः कल्याणाः स्वभोग्यभूताः सर्वविधाः
स्तस्य सन्तीत्यर्थः । सर्वमिदमभ्यात्तः । उक्तं सर्वमिदं कल्याणगुणजातम्

1. परिशुद्धा यस्य स सर्वकामः क.

---

दृशप्राप्तिमानेव भवतीत्यर्थं इष्यते, तदापि तात्पर्यमेकमेव । शाङ्करसूत्रभाष्यादौ, 'तं
पासते, तदेव भवती'त्येव श्रुत्यानुपूर्वी तत्रतत्र । तथैव च माध्यन्दिनशतपथेऽपि
१) । तत्र प्रकरणे चोपास्यस्यैव भवतिक्रियाकर्तृत्वं विस्पष्टम् । एवमन्यत्र, श्रीभाष्ये च,
त्र तथैवेति महणं मुद्गलोपनिषद्गतवाक्याभिप्रायेणेति ध्येयम् ।

**एष म आत्मा अन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा माकाद्वा श्यामाकतण्डुलाद्वा । एष म आत्माऽन्तर्हृदये ज्यायान् पृ ज्यायानन्तरिक्षात् ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः ॥ ३ ॥ स सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर ए आत्माऽन्तर्हृदय एतद् ब्रह्म ।**

---

**अभ्यात्तः** स्वीकृतवान् । भुक्ताः ब्राह्मणा इतिवत् कर्तरिक्तप्रत्ययः, अशआद्यजन **अवाकी** । वाकः उक्तिः । सोऽस्य नास्ति इत्यवाकी । कुत इत्यत्राह **अन** अवाप्तसमस्तकामत्वेनाऽऽदर्तव्याभावात् आदररहितः, अत एवावाकी । परिपू त्वात् ब्रह्मादिस्तम्बपर्यन्तं निखिलं जगत् तृणीकृत्य जोषमासीन इत्यर्थः ।

**एष म आत्मा — तण्डुलाद्वा ।** मदीये हृदये व्रीह्याद्यपेक्षया ³ [1]अल्पत्वेन एष परमात्मा उपासनार्थमवस्थित इत्यर्थः । तथानुसंधानं कर्त भावः ।

अन्तर्हृदयेऽवस्थितस्योपास्यमानस्य प्राप्याकारमनुसंधेयं निर्दिशति **आत्माऽन्तर्हृदये ज्यायान् — लोकेभ्यः** । अन्तर्हृदये विद्यमानोऽपि स निरतिशयपरिमाण इत्यर्थः । **सर्वकर्मा — अनादरः**[2] । उक्तोऽर्थः । एवम्भ ब्रह्म परमकारुण्येनासदुज्जिजीवयिषयाऽसद्धृदये संनिहितमित्यनुसंधातव्यमित्य **म आत्माऽन्तर्हृदये एतत् ब्रह्म ।**

यथोपासनमीदृशं परमात्मानम्, 'अस्माच्छरीरात् समुत्थाय परं ज्योतिर स्वेन रूपेणाभिनिष्पद्यते' इत्युक्तरीत्या देशविशेषविशिष्टं प्राप्तास्मीति निश्च

1. अल्पत्वेनेति ख. कोशे न । 2. उक्तोऽर्थ इति न क

---

**अशआद्यजन्तो** वेति । एतत्पक्षे अभ्यात्त इति भावे क्तप्रत्ययः । अभिरहस्ये णुप्रभृतत्वरूपगुणान्तरस्यापि कथनात् **सर्वमिदमभ्यात्त** इतीदं न सर्वव्यापित्वरूपम सर्वांशाभ्यासितृप्तत्वरूपमिति ध्येयम् । **तण्डुलाद्वा** इत्येतदनन्तरेण **एतद् ब्रह्मे**त्यन्तेन कारप्रतिसंधापनेन तस्य परत्वमनुभाव्य तादृशस्य तस्य केवलाश्रितबृहत्त्वापादकानवधिक मात्रकृतोऽस्मान्तर्हृदये प्रवेश इति ज्ञाप्यते ।

तमितः प्रेत्याभिसंभवितास्मीति यस्य स्यादद्धा न विचिकित्सा-
ऽस्तीति ह स्माह शाण्डिल्यः शाण्डिल्यः ॥ ४ ॥

कर्तव्यमित्याह — एतमितः प्रेत्याभिसंभवितास्मीति । अत्र इति
क्रतुं कुर्वीतेत्यनेनान्वयः । मनोमयः प्राणशरीर इत्यारभ्य, एत-
याभिसंभवितास्मीत्येतत्पर्यन्तोऽनुसंधानप्रकारः ।

त्र च इतिशब्दनिर्दिष्टो मनोमयत्वादिगुणगतः क्रमविशेष एक एव विधी-
नोमयत्वाद्युपास्यगुणानां तु आक्षेपतो विधानम्, पृष्ठगतसर्वताविधानादिव
ततश्च, 'प्राप्तानुवादेन मनोमयत्वाद्यनेकगुणविधाने वाक्यभेद' इति शङ्का
यद्वा विधेयानां बहुत्वेऽपि क्रमरूपविधेयतावच्छेदकैक्यान्न वाक्यभेदः ।
च प्रजापतये चे' ति वाक्ये देवतास्वरूपविधेयतावच्छेदकैक्येन वाक्य-

वाक्येऽनुसंधानस्य कर्तव्यताशभप्रकारं दर्शयति अत्र इतीत्यस्येति । अयं भावः—
क्रतुं कुर्वीतेति गुणविधानार्थमुपासनमनूद्य' इत्युक्तत्वात् कुर्वीतेति विधिर्नोपासनांशे
। अथ, 'स्वरूपगुणांश्चोपादेयान् प्रतिपाद्य', 'हृदये संनिहितमितीदमनुसंधानं
'प्राप्तिनिश्चयानुसंधानश्च विधाय' इति विधेयांशानां विशिष्य निर्देशात्, अभि·
स्मीति इत्यत्र इतिशब्दस्य कुर्वीतेत्यत्रान्वयो व्यज्यते । उपरि च इति यस्य स्या·
मुपसंहारात्मकमिति भाष्य एव दर्शितम् । तेन इतिशब्दस्य तत्राप्यन्वय इष्टः । ननु
ण नानेको विधातुं शक्यते गुणः' । न चारुणयैकहायन्येत्यत्र समानाधिकरणनि-
आरुण्यैकहायनीत्वविशिष्टैकद्रव्यविधिवदिहोपपत्तिः । अत्र क्रमरूपविशेष्यांशस्यापि
त्रैव विहिततया मनोमयत्वादिधर्माणामेव विधेयत्वादित्यत्र दीक्षितोक्तं द्विविधं समाधि-
ाति अत्र चेति । गुणगतः क्रमविशेष इति । गुणानुसंधानक्रम इति यावत् ।
ति । 'विश्वजिता यजेते'ति वाक्येन 'विश्वजिद्यागस्य विहितत्वात् तदुद्देशेन पृष्ठस्तो-
ह्यसामविशेषाणां च, तद्गतसर्वतायाश्च, ' विश्वजित्सर्वपृष्ठ ' इति वाक्येन विश्वजिदु-
ने वाक्यभेद इति विमृश्य पृष्ठगतसर्वतामात्रविधानम्, पृष्ठानां पाष्ठिको विधिरित्युक्तं
३.३.), तद्वदिति भावः । एवं विशेषणविधिकल्पनया विधानमुक्तम् । अथ श्रूयमाणविधिनैव
दोषश्च दर्शयति यद्वेति । क्रमरूपेत्यविवक्षितम् । क्रमो वा भवतु, अन्यो वा भवतु
ातिशब्दप्रतिपाद्यधर्म इति । यदग्नये चेति । एतदर्थः न्यायप्रकाशे, तद्व्याख्याने
। मीमांसासुधास्वादे च द्रष्टव्यः । एतद्दृष्टान्तस्य यथातथाभावेऽपि अत्र विवक्षितांशो
। इतिशब्दस्य प्रकारवाचित्वात् मनोमय इत्यारभ्य अभिसंभवितास्मि इत्येता-
थितप्रकारस्य सर्वस्य एकेन इतिशब्देनोक्तस्य कुर्वीतेतिविधावन्वयेनानेकार्थविधानाभा-
न्वस्तु तावदिहैवं परिहारः । समानप्रकरणे अग्निरहस्ये कथम्? तत्र, 'सत्यं ब्रह्मे-

भेदस्य तान्त्रिकैः परिहृतत्वात् । केचित्तु प्राप्तोपासनानुवादेन अभ्युदयेष्टिवत् प्रयोगविधित्वसंभवान्न वाक्यभेद इति वदन्ति ।

---

त्युपासीते'ति पूर्वमुपासनस्य ब्रह्मणश्च विहितत्वात्, उपरि 'स आत्मानमुपासीत मनोमयं शरीरं—सर्वा अनु दिशः प्रभूतं सर्वमिदमभ्यात्तमवाक्यनादरम्' इति प्राप्तानुवादेनानेक नात् । न च तत्र इतिशब्दादिरस्ति इत्याशङ्क्य तदुचितं प्रकारं दर्शयति केचित्तु इति (६.५.१.) 'यस्य हविर्निरुप्तं चन्द्रमा अभ्युदियात्' इत्यादिवाक्यमादाय, नात्र दर्शयागाति यागविधिः दर्शादिसंबन्धिहविर्द्रव्यप्रत्यभिज्ञानात्, किं तु उक्तदेवतापनयेन देवतान्तरोद्दे विलक्षणाकारः दर्शप्रयोगभेद इत्युक्त्वा द्रव्यदेवताद्यनेकविधानप्रयुक्तो वाक्यभेदः प्रयोगं अनेकगुणविशिष्टविलक्षणप्रयोगरूपैकार्थविधानान्न भवतीत्युक्तम् । तद्वदिति भावः । अयं भाः प्रधानकर्मविधिस्तावत् त्रिविधः, उत्पत्तिविधिः, अधिकारविधिः, प्रयोगविधिश्चेति । कर्म पस्याज्ञातस्य ज्ञापनमुत्पत्तिविधिः । तस्य फलसंबन्धबोधनम् अधिकारविधिः । तस्य सर्वाङ्गा ष्टस्य कर्तव्यताविधानं प्रयोगविधिः । न च कालकर्तृदेशक्रमादीनां प्रयोगान्वयिगुणानामेव प्र भेदकत्वमिति द्रव्यदेवतावैलक्षण्यमादायाभ्युदयेष्टौ कथं प्रयोगभेद इति वाच्यम् — काल दीनां प्रयोगैकान्वयिगुणत्वमित्येव विशेषात् । सर्वाङ्गविशिष्टप्रधानविषयकप्रयोगेऽनन्वयिग कस्याप्यभावेन यत्किञ्चिद्भेदेऽपि प्रयोगभेदसंभवात् । वस्तुतश्चन्द्रमोऽभ्युदयकालस्य दर्शे प्रागप्रा तद्विशिष्टकर्तृकत्वविधानात् तादृशगुणभेदप्रयुक्तप्रयोगभेदविधाने, तत्रापूर्वदेवताद्यन्वयादि यात् । प्रकृते च पूर्वमुपासनमात्रविधानात् तत्क्रतुवाक्येन यथोपासनफलोक्त्या अधिकारवि प्रयोगस्याविहिततया, 'स आत्मानमुपासीत' इति वाक्ये तद्विधानस्वीकारात् तत्र मनोमयत्व प्रयोगान्वयकल्पनया वाक्यभेदपरिहारादिति । एवञ्चोक्ताभिरहस्यरीत्या प्रकृतवाक्येऽपि मनो इत्यादौ अनादरइत्यन्ते षष्ठीविपरिणामेन मनोमयस्य—अनादरस्य ब्रह्मणः क्रतुं कुर्व कल्पनेऽपि प्रयोगविधानान्न वाक्यभेदः । 'एष म आत्मा' इत्यादेस्तु मे इत्युल्लेखव अभिसंभवितास्मीति इतिशब्देन ग्रहणेन, 'यस्य स्यादद्धे'त्युपरितनवाक्यान्वयस्तदा बा अस्तु वा पूर्वोक्तरीत्या इतिशब्दोक्तक्रम एव मनोमयत्वाद्यन्वयोऽपि । क्रमस्य प्रयोगान्वयि तया च सर्वक्रमविशिष्टप्रयोगविधिरिति । नन्वेवं विधिनैव मनोमयत्वादिलाभे, सर्वत्रप्रसि करणोपक्रमे टीकायाम्, 'अत्र रात्रिसत्रन्यायेन मनोमय उपास्यतया संबध्यते, आर्थवा स्यापि विध्यपेक्षितस्य स्वीकार्यत्वात्' इति कथमुक्तमिति चेन्न—मनोमयइत्यादेः क्रतुकर्तृ वैयर्थ्यात् उपास्यपरतया साक्षादनन्वयाच्च क्रतुं कुर्वीतेत्येतदर्थवादत्वमेव । परन्तु एतद्ब्रह्मेत्य ऽर्थवादः । 'एतमितः प्रेत्याभिसंभवितास्मीति' इत्यत्र एतमितिपदं मनोमयत्वाद्यार्थवादि क्षितसर्वविशेषणविशिष्टपरमिति ततस्तल्लाभ इत्याशयादिति ।

एवंविधप्राप्यप्राप्तिनिश्चयोपेतस्योपासकस्य प्राप्तौ न संशयोऽस्तीत्युपसंहरति **स्य स्यादद्धा न विचिकित्साऽस्ति** । अत्र इतिशब्दोऽध्याहर्तव्यः । **अभिभवितास्मीति** इतीतिशब्दस्य काकाक्षिन्यायेन वाऽन्वयः । **इति** उक्तप्रकारेण **स्य** उपासकस्य **अद्धा** निश्चयोऽस्ति, तस्य प्राप्तौ **विचिकित्सा** संशयो नास्तीत्यर्थः ।

उक्तार्थस्य[1] श्रद्धेयत्वसिध्द्यै वक्तुराप्तिं दर्शयति **इति ह स्माह शाण्डिल्यशाण्डिल्यः** । द्विरुक्तिर्विद्यासमाप्त्यर्था । अयमर्थः सर्वोऽपि भाष्यश्रुतप्रकाशिकयोः ष्टः ॥

एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते — इयञ्च विद्या समन्वयाध्याये द्वितीयपादे चिन्तिता । तत्र हि — सर्वं खल्विदं ब्रह्मेत्यत्र ब्रह्मशब्देन त्यगात्मैव निर्दिश्यते । तस्यैव सर्वपदसामानाधिकरण्यनिर्देशोपपत्तेः । सर्वशब्दनेर्दिष्टं हि ब्रह्मादिस्तम्बपर्यन्तं कृत्स्नं जगत् । ब्रह्मादिस्तम्बपर्यन्तभावश्च प्रत्यगात्मन नाद्यविद्यामूलकर्मविशेषोपाधिक उपपद्यते । परमात्मनः निरस्तसमस्ताव (वि) द्यस्य मस्तहेयाकरसर्वभावो नोपपद्यते । प्रत्यगात्मन्यपि ब्रह्मशब्दः क्वचित् क्वचित् प्रयुज्यते, इदं ब्रह्माऽऽयाती' त्यादौ । अत एव परमात्मा, परं ब्रह्मेति परमेश्वरस्य क्वचित् विशेषणो निर्देशः । प्रत्यगात्मनश्च निर्मुक्तोपाधेः ब्रह्मत्वञ्च विद्यते, 'स चानन्त्याय कल्पते' इति श्रुतेः । अविदुषस्तस्यैव कर्मनिमित्तत्वात् जगज्जन्मस्थितिलयानाम्, तज्जलान्' इति हेतुनिर्देशोऽप्युपपद्यते । अतो जीव एवात्र संदर्भे प्रतिपाद्यत इति पूर्वपक्षे प्राप्ते — उच्यते ।

**'सर्वत्र प्रसिद्धोपदेशात्'** । **सर्वत्र** सर्वस्मिन्, जगति, 'सर्वं खल्विदं ब्रह्मे' ति तदात्मतया विधीयमानं परं ब्रह्मैव । कुतः ? **प्रसिद्धोपदेशात्** । तज्जत्व-

1. उक्तस्य ख.

**तस्यैवेति** । न तु परब्रह्मणः । सर्वशब्देन इदन्त्वतज्जत्वतल्लत्वतदनत्वान्वयार्हस्य जगन्मात्रस्य वाच्यत्वात् तत्र ब्रह्माभेदबाधादिति पूर्वपक्षियुक्तिः । **हेयाकरसर्वभावेति** । हेयान्तर्वर्तित्वस्वीकारस्यापि संभोगप्राप्त्याऽनुपपन्नत्वे स्थिते हेयभाव एव कथमित्याशयः । **'इदं ब्रह्माऽऽयाति'** इति । इदं ब्रह्मागच्छतीति श्रुत्यन्तरमिति दीक्षितोक्तम् । **ब्रह्मत्वञ्च विद्यत** इति । अत्र, 'ब्रह्मभूयाय कल्पते । ब्रह्मभूतः प्रसन्नात्मा'(१८.५३,५४ )इति गीताऽप्यनुसंधेया ।

तज्जत्वादिना सर्वं खल्विदमिति प्रसिद्धवदुपदेशात्, यस्मात् जगज्जन्मस्थि
वेदान्तेषु प्रसिद्धाः, तदेवात्र ब्रह्मेति प्रतीयते। वेदान्तप्रसिद्धत्वञ्च परब्रह्मण
तस्यैव[1] 'यतो वा इमानि भूतानि जायन्ते' इत्यादिवेदान्तेषु प्रसिद्धेः।
ब्रह्मादिस्तम्बभावेऽपि प्रकारभूतशरीरगतानां दोषाणां प्रकारिण्यात्मन्यस्पर्शात्[2]
समस्तावद्यत्वस्य नानुपपत्तिः। जीवानाञ्च प्रतिशरीरं भिन्नानामन्योन्यतादात्म्या
सार्वात्म्यस्यासंभावितत्वात्। अतः सर्वजगत्कारणत्वप्रयुक्तसर्वात्मकत्वस्य परब्र
संभवात् परमेव ब्रह्मेह वाक्ये प्रतिपाद्यते।

'**विवक्षितगुणोपपत्तेश्च**'। विवक्षितानां [3]विशुद्धमनोग्राह्यत्वरूपमनो
सत्यसंकल्पत्वादीनां गुणानां परमात्मन्येवोपपत्तेश्च। **विवक्षितत्वं** तात्पर्यविषय
मनोमयत्वादीनाञ्च, 'यथाक्रतुरस्मिन् लोके पुरुषो भवति' इति वाक्येन[4] मनोमय
गुणकोपासनेन तद्गुणकब्रह्मप्राप्तेः फलत्वाऽऽवेदनेन फलरूपतात्पर्यलिङ्ग[5]स
मनोमयत्वादीनां तात्पर्यविषयत्वलक्षणं विवक्षितत्वमवसीयते। '**अनुपपत्तेस्तु न**
**रीरः**'। विवक्षितानां गुणानां शारीरेऽनुपपन्नत्वात् न शारीरपरिग्रहशङ्का कार्येति

'**कर्मकर्तृव्यपदेशाच्च**'। 'एतमितः प्रेत्याभिसंभवितास्मी' ति प्रा
परं ब्रह्म व्यपदिश्यते, प्राप्तृतया च जीवः। अतः प्राप्ता जीव उपासकः।
परं ब्रह्मोपास्यमिति। '**शब्दविशेषात्**'। 'एष म आत्माऽन्तर्हृदय' इति
षष्ठ्या निर्दिष्टः; उपास्यस्तु प्रथमया। अतो नोपासकस्य जीवस्योपास्यत्वम्। '
**तेश्च**'। 'सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनञ्च' इति स्मृ
पास्यं हृदयगतमुपासकाद्भिन्नं परमात्मानं दर्शयति।

'**अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमव**
अल्पायतनत्वम**र्भकौकस्त्वम्**। **तद्व्यपदेशः** अल्पत्वव्यपदेशः। 'एष म आत्मा
हृदय' इति अणीयसि हृदयायतने स्थितत्वात्, 'अणीयान् व्रीहेर्वा यवाद्वा'
दिना स्वरूपेणाणीयस्त्वव्यपदेशाच्च नायं परमात्मा; अपितु जीव एव। पर
नोऽल्पायतनत्वाल्पत्वयोरसंभवादिति चेन्न — **एवं निचाय्यत्वात्** अल्पायतनत्व

1. तस्यैवेति क. कोशे तद्विहाय तदर्थेऽत्र परब्रह्मण एवेति ख. 2. अ
र्शात् ख. 3. विशुद्धमनोग्राह्यत्वरूपेत्यधिकं क. 4. वाक्ये खादन्यत्र. 5. संभवा

३—१५.

अन्तरिक्षोदरः कोशो भूमिबुध्नो न जीर्यति ।
दिशो ह्यस्य स्रक्तयो द्यौरस्योत्तरं बिलम् ॥
स एष कोशो वसुधानस्तस्मिन् [1]विश्वमिदँ श्रितम् ॥ १ ॥

सर्वं मा.

स्यैवोपास्यत्वसंभवात् । व्योमवच्चेदं ब्रह्म व्यपदिश्यते, 'ज्यायान् पृथिव्याः' । अतश्च ज्यायस्त्वे उपाध्यश्रवणात् ज्यायस्त्वं स्वाभाविकम्, अणीयस्त्वे णात् अणीयस्त्वमौपाधिकमित्यवसीयते ।

संभोगप्राप्तिरिति चेन्न वैशेष्यात्'। परब्रह्मणः शरीरान्तर्वर्तित्वे सुखदुःखोपभोगप्रसक्तिः जीववत् स्यात् इति चेन्न — तयोरपहतपाप्मत्वान-त्वकृतविशेषसंभवात्। अतो न जीववद् भोगप्रसक्तिरिति स्थितम्॥ प्रकृतमनुस-

॥ ३-१४.

पुत्रदीर्घायुष्यफलकं त्रैलोक्यात्मककोशविज्ञानमारभ्यते । **अन्तरिक्षोदरः** — । अन्तरिक्षमुदरं यस्य स तथोक्तः । मध्यवर्तित्वादन्तरिक्षस्य उदरत्वम् । **कोशः** । कोशसादृश्यात् **कोशः** । भूमिः **बुध्नः** मूलं यस्य सः **भूमि-** **न जीर्यति** न विनश्यति । [1]चिरकालस्थायित्वादिति भावः । **दिशो** **क्तयः** । **स्रक्तयः** कोणा इत्यर्थः । **द्यौरस्योत्तरं बिलम्** । [2]उत्तरं वं मुखमित्यर्थः । **स एष कोशो वसुधानः** । कर्मफलाख्यं वसु धी-र् इति **वसुधानः** । **तस्मिन् विश्वमिदं श्रितम्** । कर्मकर्तृफलात्मक**मिदं** ।नं कृत्स्नं [3]**तस्मिन्** कोशे श्रितमित्यर्थः ।

स्थिरकालत्वात् ख. चिरकालावस्थायित्वात् ग. 2. अयमर्थः ख. कोशमात्रे । र् ख. ग.

ः परमस्मिन् प्रपाठके ऐहिकफलानि चत्वार्युपासनानि। तत्र प्रथमं पुत्रदीर्घायुष्ट्वफलकम् । प्रवसुधानकोशस्य अजीर्यत्वेन अरिष्टत्वेन स्वदिग्वत्सवायुकत्वेन च विज्ञानात् सपुत्रक भवतीति । **कोशसादृश्यादिति** । उदरबुध्नस्रक्तिमुखवत्त्वेन विश्वाख्यवसुमत्त्वेन च

तस्य प्राची जुहूर्नाम, सहमाना नाम दक्षिणा, राज्ञी नाम प्र सुभूता नामोदीची । तासां वायुर्वत्सः । स य एतमेवं वायुं वत्सं वेद, न पुत्ररोदँ रोदिति । सोऽहमेतमेवं वायुं दिशां वत्सं वेद पुत्ररोदँ रुदम् ॥ २ ॥

अरिष्टं कोशं प्रपद्येऽमुनाऽमुनाऽमुना ; प्राणं प्रपद्येऽमुनाऽमुनाऽ भूः प्रपद्येऽमुनाऽमुनाऽमुना ; भुवः प्रपद्येऽमुनाऽमुनाऽमुना ; स्वः ऽमुनाऽमुनाऽमुना ॥ ३ ॥

[1]स यदवोचम्—प्राणं प्रपद्य इति, प्राणो वा इदँ सर्वं यदिदं किञ्च, तमेव तत् प्रापत्सि[2] ॥ ४ ॥

1. अथ यत् मा. 2. प्राप्स्यथ मा.

---

**तस्य प्राची—नामोदीची** । [1]स्पष्टोऽर्थः । **तासां वायुर्वत्सः** । दिक्प्रसूतत्वात् वत्सत्वम् । **स य—रोदिति** । दिग्वत्सत्वेन वायूपासकः पुत्र [2]निमित्तं रोदनं न करोति । पाकं पचतीतिवदयं निर्देशः । रोदमिति णमु वा । **सोऽह—रुदम्** । सः एतदुपदेष्टा अहम् [3]एवमेतदुपासनमनुष्ठाय दनाभावं फलं प्राप्तवानस्मीत्यर्थः ।

अथ कोशविज्ञानाङ्गभूतान् प्रपदनमन्त्रानाह—**अरिष्टं–ऽमुना** । अ अविनाशं कोशं प्रपद्ये । **अमुनाऽमुनाऽमुनेति** त्रिः पुत्रस्य नाम गृह्णाति । पुत्रेण हेतुना अरिष्टं कोशं प्रपद्य इत्यर्थः । एवमुत्तरत्रापि ।

**प्राणं प्रपद्य** इत्यादिस्वोक्तमन्त्रान् [ चतुरः ] स्वयमेव व्याचष्टे । **दवोचं—प्रापत्सि** । सोऽहं **प्राणं प्रपद्ये** इति यद् वचनमवोचम् , तेन व

1. तस्योक्तत्रैलोक्यकोशस्य या प्राची दिक् सा जुहूनाम्ना ध्यातव्येत्यर्थः । एवमेवान्यत्र स्पष्टोऽर्थः ख. 2. नाशननिमित्तं रोदं रोदनं करोति ख. । 3. एवमिति ख. अन्यः कारः ।

---

सादृश्यम् । **प्राचीदिगादिपदं** प्राग्भागादिपरम् । **मा–रुदमिति** । रोदनं मे मा शाङ्करोक्तार्थे उपासितुरनुसंधानरूपमिदं वाक्यम् । अत्रोक्तार्थे उपदेष्टुरनुभवकथनरूपमिद अरिष्टमिति प्रथममन्त्रस्य अन्तरिक्षोदरः कोश इत्यादिनैव व्याख्यायाः वृत्तत्वात् प्राणमित्य पश्चाद् व्याख्यात । **प्रापत्सीति** शब्दप्रयोगस्वारस्यात् व्याख्यातरीत्याऽनुसंधानमपि प्रयोगानन्तरमुपासकेन कार्यमिति प्रतीयते ।

ाथ यदवोचम्—भूः प्रपद्य इति, पृथिवीं प्रपद्ये, अन्तरिक्षं प्रपद्ये,
ो इत्येव तदवोचम् ॥ ५ ॥ अथ यदवोचम्—भुवः प्रपद्य इति,
द्ये, वायुं प्रपद्ये, आदित्यं प्रपद्ये, इत्येव तदवोचम् ॥ ६ ॥ अथ
्—स्वः प्रपद्य इति, ऋग्वेदं प्रपद्ये, यजुर्वेदं प्रपद्ये, सामवेदं
इत्येव तदवोचम्, तदवोचम् ॥ ७ ॥

इति तृतीयाध्याये पञ्चदशः खण्डः ।

---

३–१६.

ुरुषो वाव यज्ञः । तस्य यानि चतुर्विंशतिवर्षाणि, तत् प्रातस्सव-
ातुर्विंशत्यक्षरा गायत्री; गायत्रं[1] प्रातस्सवनम् । तदस्य वस-

1. गायत्रं हि भा.

---

सर्वं जगत् प्रापत्सि प्रपन्नोऽभवमित्यर्थः । अथ यदवोचं भूः—तद-
भूः प्रपद्य इत्यस्य[1] त्रीन् लोकान् प्रपद्ये इत्यर्थः । अथ—तदवोचं तद-
। स्पष्टम् । द्विरुक्तिर्विद्यासमाप्त्यर्था ॥ ३–१५.

दीर्घायुष्ट्वफलकपुरुषविद्या प्रस्तूयते—पुरुषो वाव यज्ञः । [2]पुरुषस्य यज्ञ-
त्याह—

तस्य—प्रातस्सवनम् । षोडशोत्तरवर्षशतमिते पुरुषायुषे आद्यानि चतु-
र्षाणि प्रातस्सवनमित्यर्थः । तत्र तद्दृष्टिः कर्तव्येति यावत् । तत्र हेतुमाह
—सवनम् । प्रातस्सवनस्य गायत्रीछन्दस्कत्वात्, गायत्रीछन्दसश्चतुर्विंश-
कत्वात् चतुर्विंशतिवर्षे प्रातस्सवनत्वाध्यासो युज्यत इति भावः । तदस्य
न्वायत्ताः । अस्योपासकस्य तत् प्रातस्सवनं वसवः स्वामित्वेनानुगताः ।

1. इत्यस्य मन्त्रस्य ख. 2. पुरुषः स्वस्मिन् यज्ञदृष्टिं कुर्यादित्यर्थः इत्यधिकं ख.

---

ायुर्मध्ये पुत्रामरणार्था कोशविद्योपदिष्टा । अथ स्वदीर्घायुःफला पुरुषविद्योपदि-
एतद्विद्यायाः षोडशाधिकवर्षशतजीवनफलकत्वम् अस्याः यज्ञभावनारूपत्वात् यज्ञे
सवनत्रयसंबन्धिच्छन्दस्त्रयगताक्षराणां संहत्य तावत्संख्यकत्वादाहृतम् । तत्संख्यानु-
सवनत्रयविभागोऽपि कृतः । सोमे च यज्ञदिनस्य सवनत्रयात्मकत्वात् तत्र क्रियमाणस्य
धानत्वात् दीक्षादीनाञ्चाङ्गत्वात् तद्रीत्या इहापि पुरुषे यज्ञभावना तदायुर्भागेषु सवनत्रय-
कृता प्रधानम् । तत्फलं तावद्वर्षजीवनम् । तदङ्गजातश्च पुरुषसंबन्ध्यशिशिषादिषु दीक्षा-
ानाः । ताश्चाङ्गत्वात् पृथगुत्तरखण्डेन कथ्यन्ते ।

योऽन्वायत्ताः । प्राणा वाव वसवः । एते हीदँ सर्वँ वासयन्ति ॥ १

तं चेत् एतस्मिन् वयसि किञ्चिदुपतपेत्, स ब्रूयात् 'प्राणा व
इदं मे प्रातस्सवनं। माध्यन्दिनँ सवनमनु संतनुते'ति। 'माऽहं प्र
वसूनां मध्ये यज्ञो विलोप्सीये'ति। उद्धैव तत एति, अगदो ह भवति ॥

अथ यानि चतुश्चत्वारिँशद्वर्षाणि, तन्माध्यन्दिनँ सवनम् ।
चत्वारिँशदक्षरा त्रिष्टुप्; त्रैष्टुभं माध्यन्दिनँ सवनम् । तदस्य रुद्रा ३
यत्ताः । प्राणा वाव रुद्राः । एते हीदँ सर्वँ रोदयन्ति ॥ ३ ॥

तं चेत् एतस्मिन् वयसि किञ्चिदुपतपेत्, स ब्रूयात्, 'प्राणा र
इदं मे माध्यन्दिनँ सवनं तृतीयसवनमनु संतनुते'ति। माऽहं प्रा

---

प्रसिद्धयज्ञे प्रातस्सवनस्य वसुस्वामिकत्वादिति भावः । प्रसिद्धान् वसून् व्याव
प्राणा वाव वसवः । वावशब्दोऽवधारणे । प्राणानां वसुत्वे युक्तिमाह एते
सर्वँ वासयन्ति । शरीराणामशैथिल्यलक्षणवासस्य प्राणाधीनत्वादिति भ
तं चेत्—तपेत् । तं पुरुषविद्यानिष्ठम्, एतस्मिन् वयसि चतुर्विंशतिव
वयसि किञ्चित् रोगादिकम् उपतपेत् बाधेत चेदित्यर्थः । स ब्रूयात्—वि
प्सीयेति । तदा इमं मन्त्रं स उपासको ब्रूयात् जपेत् । हे प्राणा वसवः !
रूपस्य ममाधुना प्रातस्सवनं प्रवर्तते । इदं प्रवर्तमानं प्रातस्सवनं माध्यन्दिनसव
विच्छिन्नं कुरुत । प्रातस्सवनेशानां प्राणानां वसूनां मध्ये = [1]तेषु पश्यत्सु, यज्ञरू
मा विलोप्सीय लुप्तो मा भूवम् । छान्दसो माङि लुङभावः । माशब्दो
उद्धैव—भवति । ततः उपतापात् उदेति उद्गच्छति । अगदो भवति अ
भवति[2] । एवमुत्तरत्रापि ।

अथ यानि—रोदयन्ति । [3]यौवने इन्द्रियाणामत्यन्तं विषयप्रावण्य
कतया पुरुषान् रोदयन्तीति रुद्रत्वमुपपन्नमित्यर्थः । तं चेद्—। एतस्मिन् व

1. तेषु पश्यत्सु इत्यधिकं क. 2. भवतीत्यर्थः ख. 3. यौवनेत्यादिपङ्क्तिषट्क
'स्पष्टोऽर्थ' इति. क.

---

वासयन्तीतिशब्दप्रयोगः वसुशब्दार्थस्य प्रकृते समन्वयाय । वास इह स्थितिः ६
यज्ञो विलोप्सीयेति । षोडशवर्षशतात्मकसवनत्रयसंततो हि पुरुषयज्ञः मध्ये व्याध्या
पुरुषलोपे लुप्तः स्यात् । अतो वस्वादित्वेन भावितेषु प्राणेषु प्रसक्तयज्ञविलोपनिवर्तकत्व
भावनीयम् ।

द्राणां मध्ये यज्ञो विलोप्सीयेति। उद्धैव तत एति; अगदो ह भवति ॥ ४ ॥

अथ यान्यष्टाचत्वारिंशद्वर्षाणि, तत् तृतीयसवनम्। अष्टाचत्वारिँ-दक्षरा जगती। जागतं तृतीयसवनम्। तदस्याऽऽदित्या अन्वायत्ताः। [प्रा]णा वाव आदित्याः। एते हीदँ सर्वमाददते ॥ ५ ॥

तं चेत् एतस्मिन् वयसि किञ्चिदुपतपेत्, स ब्रूयात्, 'प्राणा [आ]दित्याः इदं मे तृतीयसवनम् आयुरनु संतनुते' ति। 'माऽऽहं [प्रा]णानामादित्यानां मध्ये यज्ञो विलोप्सीये' ति। उद्धैव तत एति; अगदो [ह] भवति ॥ ६ ॥

एतद्ध स्म वै तद् विद्वानाह महिदास ऐतरेयः, 'स किं म एतदुप-

---

[च]तुर्विंशतिवर्षादूर्ध्वम अष्टषष्टिवर्षमध्ये इत्यर्थः। प्राणानां रुद्राणां मध्ये माध्य-[न्]दनसवनेशानां भवतां मध्ये इत्यर्थः।

अथ यान्यष्टाचत्वारिंशद्वर्षा–। प्राणा वा आदित्याः एते हीदं सर्व-[मा]ददते। सर्वस्य विषयजातस्याऽऽदानात् प्राणानामादित्यत्वमित्यर्थः। तं चेत्–। [ए]तस्मिन् वयसि अष्टषष्टिवर्षादूर्ध्वं षोडशोत्तरशतवर्षमध्य इत्यर्थः। तृतीयसवन-[मा]युरनुसंतनुतेति। तृतीयसवनात्मकमायुः आसमाप्ति अविच्छिन्नं कुरुतेत्यर्थः। [प्रा]णानामादित्यानां मध्ये तृतीयसवनस्वामिनां भवतां मध्ये इत्यर्थः।

एतद्ध—न प्रैष्यामीति। हे रोग! स त्वं मे मां किं कस्मात् एतत् [स्व]प्रकारेण उपतपसि, योऽहं पुरुषविद्यानिष्ठः त्वत्कृतेनानेनोपतापेन न प्रैष्यामि [न] मरिष्यामि। अतस्तव श्रमो वृथैवेति, एतत् पुरुषविज्ञानस्वरूपं विद्वान् [इत]रपुत्रो महिदासनामा, आह स्मेत्यर्थः। ऐतरेयः। शुभ्रादित्वात् इतरशब्दात् अप-

---

इतरपुत्र इति। एवमेव सर्वत्र पाठः। शुभ्रादिगणेऽपि इतरशब्दः ह्रस्वान्त एव [प]ठितोऽस्ति। शाङ्करभाष्ये, 'इतरायाः पुत्र' इत्युक्तम्। तत ऐतरेयब्राह्मणभाष्यभूमिका-[या]मपि कस्यचिन्महर्षेर्बह्वीषु भार्यासु इतरानामधेया काचिदिति संप्रदायविद इति सायणेनोक्तम्। [एवं] सति 'स्त्रीभ्यो ढक्' इति ढक् अत्र न प्राप्नोति। किन्तु तदपवादः, 'अवृद्धाभ्य—' इति [एव]। शुभ्रादिगतेतरपदेन स्त्रीप्रत्ययान्तस्यापि विवक्षासंभवे तु ढक् स्यात्। एवंसति इहापि [गण]पाठगतेतरशब्दार्थो यो जनः, तत्पुत्र इत्यर्थो विवक्षणीयः स्यात्। स्वरसतस्तु गणपाठगत-[ह्र]स्वेतरशब्दबलात् ऐतरेयपितुरेव इतरेति नाम, न मातुरिति पाणिन्याशये स्थिते तद्वि-[रु]द्धौ व्याख्यानसंप्रदायौ न विश्वसनीयाविति भाष्याशय उन्नीयते।

तपसि, योऽहमनेन न प्रैष्या[1]मी ' ति । स ह षोडशं वर्षशतमजीवत
[2]प्र ह षोडशं वर्षशतं जीवति, य एवं वेद ॥ ७ ॥

इति तृतीयाध्याये षोडशः खण्डः ।

## ३—१७.

स यदशिशिषति, यत् पिपासति, यन्न रमते, ता अस्य दीक्षा[3]
अथ यदश्नाति, यत् पिबति, यद् रमते, तदुपसद्भिरेति ॥ २
अथ यद्धसति, यज्जक्षति, यन्मैथुनं चरति, स्तुतशस्त्रैरेव तदेति
अथ यत् तपो दानमार्जवमहिंसा सत्यवचनमिति, ता अस्य
णाः[4] ॥ ४ ॥

1. प्रैष्यामि शां. मा. 2. स ह मा. 3. दीक्षाः, पा. 4. एतद्
ददात्यात्मदक्षिणं वैतत् सत्रमिति इत्यधिकं माध्वमूले । न तु व्याख्याने ।

---

त्यार्थे ठक् । स—शतमजीवत् । सः महिदासः षोडशं षोडशाधिकं व
मजीवदित्यर्थः । ' तदस्मिन्नधिकमिति दशान्ताड्डः ' इति षोडशशब्दात् डप्रत्य
[अतो विद्यायां फलप्रापकत्वनिश्चयवतोऽवश्यं फलप्राप्तिर्भवतीति भाव ।] अन्ये
वंवित् षोडशं वर्षशतं जीवतीत्याह प्र ह—वेद । [ स्पष्टोऽर्थः ] ३

[तथा पुरुषस्य यज्ञसादृश्यमेव निरूपयति]—स यत्—दीक्षा । अश
पिपासारत्यभावानां दुःखात्मकत्वेन दीक्षात्वम् [ कल्प्यमित्यर्थः ] । अथ य
एति । अशनपानरतीनां पयोव्रतादियुक्तोपसद्वत् सुखरूपत्वात् उपसद्रूपत्वम् ।
सद्भिरेति उपसद्भिः साम्यमेति । उपसद्दृष्टिस्तासु [ अशनपानरतिषु ] क
त्यर्थः । अथ यद्धसति—तदेति । हासादीनां[1] शब्दवत्त्वसाम्यात् स्तुत
साम्यमेतीत्यर्थः । अथ यत् तपः—दक्षिणाः । दक्षिणादृष्टिस्तेषु कर्तव्येत्य
धर्मपु[2]ष्टिकरत्वसाम्यादिति भावः ।

1. हासभक्षणमैथुनादीनाम् ख. 2. तुष्टि क.

---

प्र हेति । प्रजीवति । प्रकर्षो रोगाद्युपतापराहित्यम् ।

स्मादाहुः सोष्यत्यसोष्टेति पुनरुत्पादनमेवास्य तन्मरणमेवा-
५ ॥

स्मादाहुः, 'सोष्यति, असोष्टे'ति पुनरुत्पादनमेवास्य [तत्?]।
ः पुरुषस्यैव यज्ञरूपत्वम्, अत एव, यथा यज्ञं करिष्यमाणे
दत्तः सोमं सोष्यती' ति प्रयुञ्जते, तथा—यदा माता तं पुरुषं जनयिष्यति
स्योत्पादनं प्रतीक्ष्य — 'पुरुषं सोष्यती' ति प्रयुञ्जते लोकाः। [1]यागानन्त-
सोष्ट सोमं यज्ञदत्त' इतिवत्, 'असोष्ट माता पुरुषम्' इति उत्पत्तेः
ुञ्जते। अतश्च पुरुषस्योत्पादनमेव 'सोष्यति', 'असोष्टे' ति शब्द-
ामान्यात् यज्ञानुष्ठानलक्षणमुत्पादनमित्यर्थः। [2]यज्ञपक्षे षुञ् अभिषवे इति
त्तिपक्षे षूङ् प्राणिप्रसव इति धातुः। तन्मर (मर?) मरणमेवावभृथः।
ाम्यात् मरणे अवभृथत्वं पश्येदिति भावः।

यागाद्यनन्तरं क. २. यज्ञपक्ष इत्यादिः धातुविवेकभागः क. कोशे.।

शिखिषादौ दीक्षादित्वकल्पनायां दुःखात्मकत्वादिसाम्यं प्रयोजकमुन्नीयते। चेतने
अचेतनयज्ञक्रियात्वकल्पनायां किं साम्यमित्यत्र साम्यं किञ्चित् श्रुतिर्दर्शयति तस्मा-
। ननु सोमं सोष्यतीत्यत्र सवने अभिषवे सोमो लता कर्म; न तु यज्ञः। तेन पुरुषे
स्यात्; न यज्ञसाम्यम्। तत्राह पुनरुत्पादनमेवास्य तत्। यज्ञस्योत्पादनमेव छ
व्यसवनम्। पुनश्शब्दः त्वर्थे। वस्तुतोऽभिषवयागयोर्भेदेऽपि अदूरविप्रकर्षात्, चरुं
पशुमालभते, सोमं सौतीति इष्टिपशुसोमयागोत्पादनेषु परिभाषणं प्रसिद्धमिति भावः।
सोमद्रव्याभिषवस्य यज्ञोत्पत्त्यनुकूलव्यापारतया स यज्ञोत्पादनमेवेति, पुरुषोत्पादनं यज्ञो-
।। अस्य वाक्यस्य विधेयोद्देश्यवाचिपदद्वयसापेक्षत्वात् तदित्यस्य अत्रैव घटनं युक्तम्।
तत् अनपेक्षितश्च। एवमेव भाष्याकूतं स्यात्। पुरुषोत्पादनमेव यज्ञोत्पादनमिति
तात्पर्यं पूर्वोक्तं ग्राह्यम्। पुनरित्येतत् पूर्ववाक्येऽप्यन्वियात्। तदा चार्थकम्।

**तद्धैतत् घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाच, अपिपास**

**तद्धैतत्—उवाच ।** घोरनामा अङ्गिरोगोत्रः कश्चिदृषिः **तदेतत्** पुरुषयज्ञदर्शनं **देवकीपुत्राय कृष्णाय**—इति शब्दोऽध्याहर्तव्यः—'कृष्णशेषभूतम्, तत्प्रीत्यर्थमित्युक्त्वा इत्यनुसंधाय **उवाच** अनुष्ठितवानित्यर्थः । वचेर्लक्षणयाऽनुष्ठानार्थत्वम् । **अपिपास एव स बभूव । सः** घोरनामा भगवच्छेषत्वानुसंधानपूर्वकपुरुषयज्ञोपासनानुष्ठानेन ब्रह्मविद्यां प्राप्य **अपिपासः**—[ इदमुपलक्षणमपहतपाप्म

1. इदं ख· कोशे ।

**कृष्णायेति** । ननु श्रीदेवकीपुत्रश्रीकृष्णवत् भक्तिधारिततन्नामदेवक्यन्तरपुत्रकृष्णान्तरस्यापि संभावितत्वात् कस्यचित् शिष्यभूतस्य कृष्णस्य ग्रहणेन **समञ्जसे** वाक्यार्थे किमिति भाष्ये परमात्मग्रहणम्, इतिशब्दाध्याहारः, **उवाचे**त्यस्यानुष्ठाने लक्षणा, **अपिपास** इत्यस्य मुक्ते लक्षणा चेति चेत् — सत्यम् । अस्तु तावत् सान्दीपनेरिव घोरस्यापि शिष्यः श्रीकृष्ण इति ; अस्तु वा तन्नामाऽन्यः कृष्ण एवेह । तथापि कोऽसौ समञ्जसो वाक्यार्थः ? पुरुषविद्यारूपविज्ञानं कृष्णाय शिष्यायोक्त्वोवाचेत्यत्र **उवाचे**त्यस्य किं कर्म ? **अपिपास** इत्यादेः न तत्कर्मत्वं संभवति । **सोऽन्तवेलाया**मित्यादेः कर्मत्वे व्यवहितान्वयापत्तिः । अपिपास इत्यादेश्च कस्तदाऽर्थः । कृष्णो विद्यान्तराधिजिगमिषारूपपिपासारहितो बभूवेत्यर्थ इति चेत् — स इत्यस्याप्रधानपरामर्शित्वापत्तिः ; पिपासापदलक्षणा च । ननु ५–२–३. स्थल इव **अपिपास** इत्यादिकं सर्वमेव उवाचेत्यस्य कर्म । **सः** पुरुषविद्यानिष्ठः **अपिपासः** रोगादिरहितः सुखजीवी **बभूव** भवेत् । 'छन्दसि लुङ्लङ्लिटः' इति लिङर्थे लिट् । 'प्रोवाच तां तत्त्वतो ब्रह्मविद्या' मितिवत् इति चेत् — अशनाया पिपासा च यथाकालं यस्य, स खलु सुखजीवी । न त्वपिपासो मन्दाग्निः । तत् कथं **तदर्थयोगः** ? पिपासाशान्त्यर्थवस्तलाभप्रयुक्तपिपासापीडारहित इति तदर्थं इति चेत् — लक्षणैव दोषः । एतादृशार्थवर्णने च **अपिपास एव स बभूवे**त्यस्य **सोन्तवेलाया**मित्यादेश्च न कश्चित् संबन्धोऽस्ति । षोडशाधिकवर्षशतजीवनरूपफलस्य प्रागेतदकरणेऽपि लब्धतया अन्तवेलायां विहितस्य एतत्त्रयजपस्य पुरुषविद्याङ्गत्वानुपपत्तिश्च । अतः अवस्तात्, 'महिदास आह ; स ह षोडशं वर्षशतमजीवत्' इतिवत् 'घोर उवाच, अपिपास एव स बभूवे' ति प्राचीनपुरुषव्यापारस्य साफल्यप्रदर्शनेन प्ररोचकमिदं वाक्यं युक्तम् । तदा च बभूवेत्येतन्न लाक्षणिकम् । एवञ्च **तद्धैत**दिति वाक्यस्यैवमवतरणम् । ननु किमनेन षोडशवर्षशतजीवनेन पश्चात्तनपुरुषार्थानुपयोगिना ? तत्राह **तद्धैत**दिति । पुरुषविद्यानिष्ठ एव घोर आङ्गिरसः अपिपासोऽपि बभूव । यत्तत् प्रेतीभूतस्य पिपासा कापि भवतीति वदन्ति तद्रहितो बभूव । 'यदु चैवास्मै शव्यं कुर्वन्ति, यदु च ने' त्युक्तरीत्या प्रेतभावाद्यभावात् अपिपासो मुक्तो बभूवेति । ननु पुरुषविद्यारूपपद्धतिविधिप्रवृत्तस्य परब्रह्मचिन्तारहितस्य कथं मुक्तिरिति शङ्कानुन्मेषाय अपिपासभावप्रयोजकाकारप्रदर्शकं कृष्णाय देवकीपुत्रायोक्त्वोवाचेति

स बभूव, सोऽन्तवेलायामेतत् त्रयँ प्रतिपद्येत, 'अक्षितमसि,' च्युतमसि,' 'प्राणसँशितमसी'ति ।

गुणाष्टकस्य ] — मुक्तो बभूवेत्यर्थः । ततश्च षोडशाधिकवर्षशतजीवनफलक-पुरुषयज्ञदर्शनस्य भगवच्छेषत्वानुसंधानपूर्वकमनुष्ठितस्य ब्रह्मविद्योपयोगित्वमप्य-। भावः । [1]यद्वा स बभूवेत्यस्य स भवतीत्यर्थः । सोऽन्तवेलायामित्यत्र स । य इत्यर्थः । ततश्च योऽन्तवेलायामेतत्त्रयं प्रतिपद्येत, सोऽपिपासो भवती-त्यान्वयः । [ [2]पुरुषविद्यानिष्ठस्यान्त्यकाले जप्यान् मन्त्रानाह — ] सोऽन्त— द्येत । सः भगवच्छेषत्वानुसंधानपूर्वकपुरुषविद्यासाधितचिरायुष्ट्वानुगृहीतब्रह्म-नेष्ठः पुरुषः अक्षितमसि, अच्युतमसि, प्राणसंशितमसि इत्येतन्मन्त्रत्रयं काले जपेदित्यर्थः । अक्षितमसि क्षयशून्यमसि । अच्युतमसि स्वरूपस्वभाव-तेशून्यमसि । प्राणसंशितमसि जगत्प्राणयितृत्वे सति संशितं सूक्ष्मतत्त्वम-ब्रह्म[3]संबोधनम् । शो तनूकरण इति हि धातुः ।

1. इदं ग कोशे घ. कोशे च । ग. कोशे यद्वा इति न । 2. इदं क. कोशे । ग्रणः क. ।

[। अतस्तदर्थ एवमेव वर्णनीय इति । एवञ्च उवाचेत्यस्यानुष्ठानलक्षणायां न 'सो-ायां' मित्यादिना व्यवहितेनान्वय इति दोषोऽपि । ननु श्रीकृष्णप्रीत्यर्थं पुरुषविद्यानु-ास्य निष्कामकर्मणः चिरायुष्ट्वरूपं फलं कथमिति चेत् — पुरुषविद्यासंपादितस्यायुषः श्रीकृ-यैव तदनुष्ठानात् । नन्वेवं पुरुषविद्यानिष्ठेनानुष्ठीयमाना का सा ब्रह्मविद्या, यतो मोक्षो अत्राह सोऽन्तेत्यादि । अन्तिमप्रत्ययोपयोगितया अन्तवेलायामस्यैतन्मन्त्रत्रयार्थानुसं-दर्थजपादिकं श्रीकृष्णानुग्रहबलाद्भवेदित्युक्त्या पुरुषविद्यानिष्ठः स्वायुषि एतन्मन्त्रत्रय-: स्यादिति सूच्यते । अत्रेदं बोध्यम् — 'नात्र कृष्णपदेन शिष्यो ग्राह्यः । नाप्युवाचे-मुख्यार्थ आदर्तव्यः । नापि बभूवेत्यस्य भवेदित्यर्थो ग्राह्य' इत्यत्र न भाष्यकृतां निर्भरः । पुरुषविद्यानिष्ठेनापि परं ब्रह्म प्राप्यते तदायुर्द्वारेत्यर्थ इह विवक्षणीयः, उपरि ऋग्द्वयोदाह-रोधादित्यलैव । तथाच घोर आङ्गिरसः स्वशिष्यं कञ्चित् प्रति पुरुषविज्ञानमुपदिश्यो-वाच । किमिति ? 'सोऽयं पुरुषविद्यानिष्ठो मुक्त एव भवति । कथमिति चेत् — अन्त-मेतन्मन्त्रत्रयार्थानुसंधाना' दिति वाक्यार्थवर्णनेऽपि न नो विद्वेषः । समानतात्पर्यादिति । यद्वेत्यादियोजनान्तरेण दर्शितमपि स्यात् । एवं तत्र तच्छब्दस्य यच्छब्दार्थवर्णनेऽप्य-द्रष्टव्यः ।

